लवङ्गी अलं क्रूरे असम्बद्धप्रलपितेन! तव मुखं हस्तेन स्थगयामि अथवा वाक्यशेषं पूरय। किमद्यत्वे?

सखी यो ह्यद्यत्वे भणति-

**उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता।**
**तदपि न हा विधुवदना मानससदनाद् बहिर्याति॥**

लवङ्गि लज्जाम् आह्लादञ्च कथं न रुणत्सि? अरे! कुत्र विलीनासि? किं विस्मृतं त्वया यदद्य सम्राज्ञाः पुरस्तव नृत्याभ्यासः परीक्ष्यते। ननु नृत्यकाले तमेव स्मृत्वा पदभङ्गं मा कार्षीः अन्यथा-

लवङ्गी अलं प्रतिक्षणं परिहासेन। चल सम्राज्ञीं प्रति प्रतिष्ठावहै।

**(४ राजप्रासादः। सम्राज्ञाः विश्रामकक्षः)**

शाहजहानः सम्राज्ञि, ननु कुशलिनी भवती?

सम्राज्ञी सर्वमपि कुशलं यदि भवन्तः प्रष्टारः। अद्यत्वे तु भवन्तः पण्डितराजस्य कवितामेवाभिलषन्ति न तु माम्। पण्डितराजस्य कविता तु मन्ये मदीया सपत्नी जाता।

शाहजहानः (विहस्य) वस्तुतः सः करोत्येव एवंविधां कवितां यां निपीय मृद्वीकारसझरीमपि नाद्रियते सहृदयः। अतीव मेधावी अयं जगन्नाथः यो हि सुकुमारवस्तुनि साहित्ये न्यायग्रहग्रन्थिले च तर्के समानाधिकारी। भवतीमपि तस्य कवितां श्रावयिष्यामि।

सम्राज्ञी मया तत्कविता श्रुता वर्तते। अतीव मनोहारिणी।

शाहजहानः कदा श्रुता? कस्य मुखेन?

सम्राज्ञी लवङ्ग्या श्राविता। सैव कुतश्चिच्छ्रुत्वा समायाता। इमं श्लोकं श्रावयति स्म-

**नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि।**
**यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम्॥**

शाहजहानः अये! लवङ्गी तु नितान्तं मेधाविनी या हि पण्डितराजस्य कवितां भवत्सम्मुखे प्रस्तुतवती। ननु सा स्वयमपि तु काव्यं

करोति। संस्कृतेऽपि तस्या रुचिरस्त्येवाबाल्यादेव! अस्तु, अन्यदपि किंचित्कथयति स्म सा?

**सम्राज्ञी** कथयति तु न स्म किन्तु व्यनक्ति स्म।

**शाहजहानः** किम्?

**सम्राज्ञी** पण्डितराजे स्वकीयमनुरागम्। मया तु इदमपि ज्ञातं यत्सा कदाचित्पण्डितराजं संस्कृतकविताशिक्षायै प्रार्थितवत्यपि। प्रमत्ता इव संवृत्तास्ति सा। यदाप्रभृति पण्डितेन्दुर्विलोकितस्तदाप्रभृत्येव तस्या लोचनचकोराभ्यां चाञ्चल्यमुररीकृतम्। इयं तस्या दशा। पण्डितराजस्य को मनोभावः इति भवन्तः जानन्तु।

**शाहजहानः** हुं, इदं रहस्यम्! तदैव तु पण्डिराजोऽद्यत्वे रसराजकवितां करोति। मन्ये, गुरुजनभयं द्वयोरपि प्रीतिं समधिकतरां विदधाति। यद्यपि स्पष्टं तु पण्डितराजेन न भणितं किन्तु कविताद्वारा तस्य लवङ्गीप्रेम व्यज्यते- इति मे विश्वासः।

**सम्राज्ञी** एवम्? तदा तूभयनिष्ठं प्रेम!

**शाहजहानः** प्रेम अपि कियच्चतुरम् स्वकीयं क्रीड़ास्थलं सर्वत्रैव अन्विषति। प्रहरिभिः परिवृतेऽपि राजभवने प्रेमियुग्मं क्रीडां करोति। प्रेम्णि नापि राज्याङ्कुशः नापि गुरुजनाङ्कुशः। यदि कोऽप्यङ्कुशस्तत्रारोप्यते तर्हि तस्य वृद्धिरेव भवति।

**सम्राज्ञी** अस्य प्रेमियुग्मस्य किं भविष्यं भवन्मते?

**शाहजहानः** सम्राज्ञि, द्वयोरपि मङ्गलमस्मत्प्रियम्। पण्डितराजोऽपि स्वकीयः, लवङ्गी अपि स्वकीया एव। आबाल्यादियं कन्याऽस्माभिः सुतेव परिपाल्यते। कोऽपि न जानाति यत् कस्येयं सुता? पयोमुखी बाला अधुना यौवने पदं दधाति। तस्याः प्रीत्यर्थं वयं सर्वमपि कर्तुं व्यवसिताः। किमु सा पण्डितराजस्य विषये अन्यदपि किंचित्कथयति स्म?

**सम्राज्ञी** कथमिदं सम्भाव्यते-यत्सलज्जा बाला वाचा सर्वमपि कथयेत्? यो नाम प्रेमाभिभूतायाः आकारेण इङ्गितैः गत्या चेष्टया नेत्रवक्त्रविकारैश्च अन्तर्गतं मनो न वेत्ति सः स्पष्टाभिनेनैव

किं ज्ञास्यति? मया यज्ज्ञातमस्ति तत्प्रामाणिकम्। अहमिव भवन्तं सा पण्डितराजं वीक्ष्य, अनुश्रुत्य सम्भाष्य च अन्यथैव संवृत्ता। तयोर्मेलनं प्रेमानुरागाभिज्ञैर्भवद्भिरवश्यमेव सम्पादनीयम्।

**शाहजहानः** (सहासं) यथा भवत्यै रोचते! (गम्भीरः सन्) किन्तु पण्डितसमाजः कथमिव पण्डितराजमनुज्ञास्यति यवनपालितां कन्यां ग्रहीतुम्-इति प्रश्नः। अथवा भवतु, यदि प्रकृष्टं प्रेम द्वयोस्तदा तु न कोऽपि तौ वारयितुं शक्नोति, यदि केवलं रूपासक्तिरेव तदा अन्यथा सम्भावना। गच्छामि विश्रामकक्षे। मया पण्डितराजः चतुरङ्गक्रीडार्थमामन्त्रितोऽस्ति।

**सम्राज्ञी** विश्रामस्तु अत्रापि कर्तुं शक्यते! किन्तु अद्यत्वे तु भवन्तः मत्तः दूरमेव तिष्ठन्ति। प्रातःकालेऽपि तस्यैव कविता, रात्रावपि। अधुना मध्याह्न-विश्रामवेलायामपि पण्डितराजेन सार्धं चतुरङ्गक्रीडा।

**शाहजहानः** (विहस्य), सम्राज्ञि, ननु भवती तु मम मानसे सदैव तिष्ठति। किन्तु पण्डितराजः चतुरङ्गक्रीडायामतीव चतुरः, अतस्तेन साकं क्रीडायामतीवानन्दानुभूतिर्जायते। अधुना अनुमतः स्याम्?

**सम्राज्ञी** साधु, अनुमताः। मयापि लवङ्गी आहूता वर्तते। मध्याह्नविश्रामवेलायां मुग्धायास्तस्या वचनावलीः श्रुत्वा परमं मोदं मदं च लभे। सापि अद्यत्वे काव्यनिर्माणे अतीव चतुरा इव लक्ष्यते। अद्य तस्याः काव्याभ्यासे नृत्याभासे च मया परीक्षा निर्धारितास्ति। अये! इयमागतैव सखीसहिता लवङ्गी।

**लवङ्गी** (प्रविश्य) नमस्करोमि अत्रभवन्तौ।

**सम्राज्ञी** प्रसन्ना भव लवङ्गि!

**शाहजहानः** लवङ्गि! तवैव चर्चा प्रवर्तते स्म।

**सम्राज्ञी** लवङ्गि स्तब्धा किमिति भवसि ?

**शाहजहानः** अस्माभिः श्रुतं यत्त्वमद्यत्वे अतीव पटुः संजाता। काव्याभ्यासे नृत्याभ्यासे च।

**सम्राज्ञी** लवङ्गी विवर्णा मा भव।

**शाहजहानः** श्रावय तु किंचित् पद्यम्।

**सम्राज्ञी** ननु श्रावय, किमर्थं लज्जसे? त्वयि महाराजस्य अतीव वात्सल्यम्।

**लवङ्गी** पद्यद्वयमद्यैव लिखितम्। कीदृशमिति तु भवन्त एव जानन्तु-

**पंकज! तव लघुजातिः, सन्ति गुणास्ते च मोदाद्याः।**
**कज्जल! तव खलु जन्म, दीपात्तस्मिन् कलङ्कस्त्वम्॥**
**लोकेऽखिलवस्तूनां गुणाः क्रियाश्चैव पूज्याः स्युः।**
**नो जातिर्न च नाम कज्जलपङ्केरुहाणामिव॥**

**शाहजहानः** लवङ्गि! तव कवितामाकर्ण्य ते सखी किमपि वक्तुकामेवावलोक्यते।

**सखी** अनया नीरसया अवकरोपमितया शब्दयोजनया न ते कवित्वं सेत्स्यति लवंगि। ननु अन्यां कांचित् रसभावभरितां कवितां श्रावय। महाराज! अनया अद्यत्वे नवनवानि बहूनि रसभावभरितानि पद्यानि कण्ठीकृतानि। अहमपि अस्याः संसर्गेण काव्यज्ञा संवृत्तास्मि। कदाचिदावयोः काव्यपाठप्रतिस्पर्द्धामायोजयतु देवः।

**शाहजहानः** शोभनः प्रस्तावः। सम्राज्ञि, भवती एतां काव्यपाठस्पर्धामायोज्यं मां सूचयतु। लवङ्गि! वयं तव काव्यपाठेन प्रभाविताः स्मः।

**सम्राज्ञी** वस्तुतः लवङ्गि, त्वं तु कवयित्री जायमाना दृश्यसे? कः खलु तव काव्यशिक्षकः?

**शाहजहानः** सम्राज्ञि, चलाम्यहम्! अयं तस्यागमनस्य समयः।

**सम्राज्ञी** बाढम्! संनिहितमेव भवतां विश्रामगृहम्। यदि तर्षादिकं बाधेत तर्हि आज्ञापयन्तु।

**शाहजहानः** युक्तम्।

## (५)

## (शाहजहानस्य विश्रामगृहम्)

**जगन्नाथः** (प्रविश्य) विजयतां महाराजः!

**शाहजहानः** स्वागतं पण्डितपते! आस्यताम्। अद्यत्वे किं किं व्यवस्यते?

**जगन्नाथः** सद्य एव मया 'आसफविलासो' विरचितः।

**शाहजहानः** गद्ये पद्ये वा?

**जगन्नाथः** द्वयेऽपि।

**शाहजहानः** शोभनम्! अन्यत् किं विरच्यते?

**जगन्नाथः** रसगङ्गाधरनामा साहित्यशास्त्रीयग्रन्थः प्रारिप्सितः। तत्कृते एव बहूनि पद्यानि लिख्यन्ते। स्वतन्त्ररूपेणापि कानिचित्पद्यानि प्रणीतानि।

**शाहजहानः** अपि श्रावयिष्यति भवान् पद्यमेकम्?

**जगन्नाथः** **नूनम्, यदि शुश्रूषवो भवन्तः।**

**तन्मञ्जु मन्दहसितं श्वसितानि तानि**
**सा वै कलंकविधुरा मधुराननश्रीः।**
**अद्यापि मे हृदयमुन्मदयन्ति हन्त**
**सायन्तनाम्बुजसहोदरलोचनायाः।।**

**(सम्राज्ञाः कक्षे सम्राज्ञी लवङ्गि! शृणोषि पण्डितराजस्य कविताम्? लवङ्गी अहं तु श्लोकस्पर्द्धार्थं श्लोकान् चिन्तयामि।)**

**शाहजहानः** पण्डितराज! केय सायन्तनाम्बुजसहोदरलोचना?

**(सम्राज्ञाः कक्षे पातिसाहस्य प्रश्नमतिसावधानतया शृणोषि लवङ्गि' - इति सम्राज्ञाः ध्वनिः)**

**जगन्नाथः** कवेः सृष्टौ कल्पनासाम्राज्यम्-यद्बलेन स एवंविधां सायन्तनाम्बुजसहोदरलोचनां नयनपथमानयति।

**शाहजहानः** (स्वगतम्) गोपनचतुरोऽस्ति पण्डितराजः। (प्रकाशम्) अन्यामपि कवितां श्रावयतु।

**जगन्नाथः** **गुरुजनभयमद्विलोकनान्तःसमुदयदाकुलभावमावहन्त्याः।**
**दरदलदरविन्दसुन्दरं हा हरिणदृशो नयनं न विस्मरामि।।**

**शाहजहानः** उत्तमं! प्रतीयते कोऽपि वास्तविकोदन्तो निबद्धोऽस्मिन् पद्ये (स्वगतं) सम्राज्ञी सत्यमेव भणति स्म।

( सम्राज्ञाः कक्षे )

**सम्राज्ञी** लवङ्गि कीदृशं पद्यम्?

**लवङ्गी** मया तु किमपि न श्रुतम्।

**सम्राज्ञी** मिथ्या वदसि?

**लवङ्गी** युक्तम्।

**शाहजहानः** पण्डितराज! भवतां कवितामाकर्ण्य तु शुश्रूषा वर्द्धत एव नेयं शाम्यति। अन्यामपि कांचित् कवितां श्रावयतु।

**जगन्नाथः** **इत एव निजालयं गताया वनिताया गुरुभिः समावृतायाः।**
**परिवर्तितकन्धरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि॥**

**शाहजहानः** पण्डितराज, क्वेदं लोकावेक्षणं क्रियते यस्य प्रतिफलनं काव्ये संजायते?

**जगन्नाथः** महाराजेनाहं चतुरङ्गक्रीडार्थमाहूतोऽथवा पद्यश्रावणार्थम्? मन्ये, हीयते क्रीडावेला। चतुरंगक्रीडा प्रारभ्यताम्।

**शाहजहानः** ओः वरम् (स्वगतं) शीलवानयं पण्डितराजो यो हि प्रियावृत्तान्तं स्पष्टतो नैव भणति (प्रकाशं) सज्जीभवतु भवान् चतुरङ्गक्रीडार्थम्। भवत एव प्रथमा गतिः।

**जगन्नाथः** अयं पदातिः।

**शाहजहानः** अयमश्वः।

**जगन्नाथः** पुनरपि पदातिः।

**शाहजहानः** अस्माकमपि पदातिः।

**जगन्नाथः** अयमुष्ट्रः।

**शाहजहानः** अयमश्वः।

**जगन्नाथः** इदमाक्रमणम्।

**शाहजहानः** ओः, इयं सुरक्षा।

**जगन्नाथः** (सगुञ्जनं) पुनः पदातिः।

**शाहजहानः** किं सगुञ्जनं मनस्येव गीयते? प्रकाशं श्रावयतु। चतुरङ्गक्रीडायाः कवितायाश्च रसः युगपदेव आस्वाद्येत।

**जगन्नाथः** (स्वगतं) मत्कवितायामासक्तः पातिसाहोऽधुना चतुरङ्गगतिं नावधारयिष्यति, (प्रकाशम्) श्रावयामि।

**तदवधि कुशली पुराणशास्त्र-**
**स्मृतिशतचारुविचारजो विवेकः।**
**यदवधि न पदं दधाति चित्ते**
**हरिणकिशोरदृशो दृशोर्विलासः॥**

(सम्राज्ञाः कक्षे- सम्राज्ञी ननु शृणोसि लवङ्गि?

**लवङ्गी** शृणोमि)

**शाहजहानः** उत्तमं (स्वगतम्) यथार्था अभिव्यक्तिः।

(प्रकाशं) पण्डितराज, पुरस्काररूपेण किं दीयेत?

**जगन्नाथः** भवत्कृता प्रशंसैव पुरस्कारः। न हि वयं कवयो धनवैभवमेव परमं पुरस्कारं मन्यामहे। अस्तु, भवता तु गतिरेव विस्मृता।

**शाहजहानः** ओः! अधुना तु भवान् जेतव्यो विद्यते। अयं पदातिः।

**जगन्नाथः** तर्हि अत्रभवन्तो मां जेतुकामाः स्वगतिकौशलेन। (स्वगतं) मां तु केवलं सैव जेतुं शक्नोति यस्या प्रत्येकमिङ्गितं मनसि स्मारं स्मारं मदाविष्ट इव भवामि, न जाने कदा सा नवनीतकोमलाङ्गी-

**शाहजानः** किं चिन्तयति पण्डितराजः? गतिं प्रत्युत्तरतु।

**जगन्नाथः** गतेरुत्तरमेव चिन्तयामि। अयमुष्ट्रः।

**शाहजहानः** अधुना भवान् पराजितो भविष्यति।

**जगन्नाथः** यदा भविष्यामि, तदा भविष्यामि। गृह्यताम्। इदमाक्रमणम्।

**शाहजहानः** ओः विषमा गतिः प्रदर्शिता भवता। तर्षाकुलोऽहम्। पेयं वाञ्छामि। कः कोत्र भोः? पेयम्।

(सम्राज्ञाः कक्षे सम्राज्ञी-लवङ्गि, महाराजस्तर्षाकुलः संवृत्तः। दासी मया क्वचित्प्रहिता वर्तते। गच्छ, त्वमेव पेयं नय। ननु कथं लज्जसे? गच्छ, तत्रैव तव पण्डितराजोऽपि। त्वरितं गच्छ।

**लवङ्गी** यथाज्ञापयति सम्राज्ञी।)

**जगन्नाथः** एकस्यामेव गतौ तर्षाकुलः संवृत्तः महाराजः?

**शाहजहानः** गृह्यतामुत्तरम्, इदमाक्रमणम्-

**लवंगी** -(प्रविश्य) महाराज! इदं पेयम्।

**जगन्नाथः** (स्वगतम्) अधुना परास्तोऽस्मि। विषमा गतिः। न क्वचिदपि सुरक्षा। न क्वापि शरणम्।

**शाहजहानः** लवङ्गि, त्वमेव कथं पेयं नीत्वा उपस्थिता?

**लवङ्गी** महाराज, पेयवाहिनी दासी सम्राज्ञ्या क्वचित् कार्यार्थं नियोजिता। तयैवाहमत्रभवद्भ्यः पेयं दातुं प्रेषिता।

**शाहजहानः** बाढम् देहि पेयम्। पण्डितराज! गतिं प्रतिकरोतु। तूष्णीं कथं तिष्ठति भवान्?

**जगन्नाथः** अधुना त्वहं परास्तोऽस्मि। विवशोऽस्मि। विषमा गतिः प्रदर्शिता भवता। को नामास्या विषमाया गतेः पुरस्तात्परास्तो न स्यात्? आत्मसमर्पणं करोमि।

**शाहजहानः** भवतु, भवानपि पानार्थी?

**जगन्नाथः** (स्वगतं) पानं तु करोम्येव सौन्दर्यस्य न तु पेयस्य। (प्रकाशं) कथं पङ्क्तिभेदं कुर्याम्? लवङ्गि! दीयतां पेयम्।

**लवंगी** (स्वगतम्) अये पण्डितराजं वीक्ष्य शरीरे मनसि च अन्यदिव भवति। नापि स्थातुं नापि च गन्तुं मे शक्तिः।

**शाहजहानः** लवङ्गि! ननु पण्डितराजाय पेयं देहि-

**लवंगी** प्रस्तुतं पेयं (पात्रकम्पनध्वनिः)।

**शाहजहानः** लवङ्गि! पण्डितराजाय पेयदानकाले तव हस्ते कम्पः कथं संजायते?

**लवङ्गी** (स्वगतं) पातिसाहेन निगृहीतास्मि। (प्रकाशं) देव एकस्मिन् हस्ते पात्रं द्वितीये च चषकं निश्चलतया ग्रहीतुं न शक्नोमि। अत एव कम्पः।

**शाहजहानः** युक्तम्। पण्डितराज! पेयं कीदृशम्?

**जगन्नाथः** शीतलमपि, तर्षकरमपि। अतीव स्वादु। (मुखशब्दः)

**शाहजहानः** पण्डितराज! चतुरङ्गक्रीडायां पराजितो भवान्। अधुना दण्डनीयः स्यात्।

**जगन्नाथः** कथमिव?

**लवङ्गी** (स्वगतं) न जाने कं दण्डं दास्यति देवः पण्डितराजाय।

**शाहजहानः** पण्डितराज! कवितां श्रावयतु दण्डरूपेण।

**जगन्नाथः** (स्वगतं) इदं तु मामकीनमेव मनोगतं पातिसाहेनोद्गीर्णम्। (प्रकाशं) यथा देव आज्ञापयति। एष कवितां प्रस्तौमि। परं प्रथममहमन्यदपि पेयमभिलषामि।

**शाहजहानः** लवङ्गि! पण्डितराजाय अन्यदपि पेयमानय।

**लवङ्गी** यथाज्ञापयति महाराजः।

**जगन्नाथः** **इयं सुस्तनी हस्तविन्यस्तकुम्भा**
**कुसुम्भारुणं चारुवासो दधाना।**
**समस्तस्य लोकस्य चेतःप्रवृत्तिं**
**गृहीत्वा घटे न्यस्य यातीव भाति॥**

**लवङ्गी** (स्वगतं) कवितामाकर्ण्य मनश्चरणौ च पश्चादेव प्रयान्ति नत्वग्रे।

**शाहजहानः** सूक्तम्। पण्डितराज, वयं भवतः कविताकौशलेन तुष्टाः यथाभिलषितं ते दास्यामः। ब्रूहि मनोगतम्।

**लवङ्गी** (प्रविश्य) इदं पेयम्।

**जगन्नाथः** (स्वगतं) कथं याचे?

**शाहजहानः** ननु ब्रूहि निःशंकम्?

**जगन्नाथः** (स्वगतं) अयमेवावसरो गुरुजनपराधीनां लवङ्गीं प्राप्तुम् (प्रकाशं) देव, यदपि याचे तद् दास्यसि?

**शाहजहानः** अवश्यम्। ननु दिल्लीश्वरोऽहम्।

**जगन्नाथः** तर्हि श्रूयताम्-
**न याचे गजालिं न वा वाजिराजिं**
**न वित्तेषु चित्तं मदीयं कदाचित्।**
**इयं सुस्तनी हस्तविन्यस्तकुम्भा**

लवङ्गी कुरङ्गीदृगङ्गीकरोतु॥
इयं सुस्तनी मस्तकन्यस्तहस्ता
कुसुम्भारुणं चारु वासो वसाना।
अरम्भासमानापि रम्भासमाना
लवङ्गी कुरङ्गीदृगङ्गीकरोतु॥

**लवङ्गी** (स्वगतं) अये कीदृशं शृङ्गारमुद्गिरति पातिसाहसमक्षं पण्डितराजः। न जाने देवः किं भणति? यदि स्वीकरोति तदा जीवनम्, यदि निषिद्ध्यति तर्हि मरणम्।

**शाहजहानः** पण्डितराज! भवान् पण्डितः, लवङ्गी च यवनपालिता। कथं भवान् तां कामयते?

**जगन्नाथः** (स्वगतं) इयं नवनीतकोमलाङ्गी यदि मया प्राप्यते तर्हि स्वर्गराज्यमपि तिरस्करोमि। (प्रकाशं) सौन्दर्यं प्रेम च जातिविशेषं नाद्रियेते। यवनी वा स्यात् लवङ्गी अन्यजातीया वा स्यात्-मन्मते तु सा केवलं लवङ्गी, निरुपधिर्लवङ्गी। अधुना किं गोपयामि? यदा प्रभृति इयं मयावलोकिता तदाप्रभृत्येवेयं मामकीनकवितायाः प्रेरणा संजाता। अधुनेयं मम पत्नी भवतु इति कामये।

**शाहजहानः** पण्डितराज, आश्चर्यकरी भवतो याचना। परं किमियमेकनिष्ठा रतिस्तु नास्ति? लवङ्ग्या अभिमतमपि तु ज्ञेयम्। (लवङ्गीं प्रति) लवङ्गि! पण्डितराजस्य याचना तवाभिमता न वा? अस्माभिरियं याचना पूरणीया?

**शाहजहानः** (विहस्य) भवन्तावुभावपि चतुरौ। प्रेमपरीक्षायां समुत्तीर्णौ। पण्डितराज, भवते लवङ्गी प्रदत्ता। इयमस्मत्पालिता कन्या सुखिनी स्यात्। शुभं कामये भवतोः। लवङ्गि! धन्यासि पण्डितेन्द्रकल्पद्रुमं प्राप्य।

**जगन्नाथः** दिल्लीश्वरो वा जगदीश्वरो वा
मनोरथं पूरयितुं समर्थः।
अन्यैर्नृपालैः परिदीयमानं
शाकाय वा स्याल्लवणाय वा स्यात्।

(विवाहमन्त्रध्वनिः। शहनाईवादनम्)

**नेपथ्ये** पण्डितानां ध्वनयः 'अब्रह्मण्यम्। तैलङ्गान्वये जगन्नाथेन कलङ्कायितं यवनीपरिणयेन' 'क्व ब्राह्मणवंशः क्व च यवनीस्पर्शः? किमु तस्य अन्यत्र विवाहो नैव भवति स्म?' 'ननु राजसम्मानेनोपचितः सन् विमूढो जातः,' 'पण्डितराजोपाधि-लाभाभिमानिनो जगन्नाथस्य समाजात् बहिष्कारं क्रियताम्।'

**अपरो ध्वनिः** अये पण्डितराजसदृशा मानवोत्तमाः युष्माकं वचांसि नापेक्षन्ते। ते तु सार्वभौमाः युष्माकं वचांसि उपेक्षन्ते। यदि साहसमस्ति तर्हि तत्समक्षं गत्वा तस्य बहिष्कारं कुरुत।

**प्रथमो ध्वनिः** गम्यते तत्सकाशमेव। तस्यैव द्वारि तस्य बहिष्कारः करिष्यते।

## ( ६ पण्डितराज-गृहम् )

**जगन्नाथः** लवंगि, वस्तुतः अद्य इदं गृहं संवृत्तम् यत्र त्वं गृहिणीरूपेण मयासादिता-

**हरिणीप्रेक्षणा यत्र गृहिणी न विलोक्यते।**
**सेवितं सर्वसम्पद्भिरपि तद् भवनं वनम्।**

**लवङ्गी** पातिसाहेनापि आवयोः कामना पूरितैव। अहं तु बिभेमि स्म। यदाप्रभृति मया भवतः कविता सखीमुखेन श्रुता यदा चैकवारं भवान् विलोकितः संभाषितश्च तदाप्रभृत्येव अहं तु अवसरम् अन्वीक्षमाणा आसम् भवत्सान्निध्यं प्राप्तुम्। अधुना तु भगवता मम मनोरथः पूर्णः।

**जगन्नाथः** अहमपि त्वां वीक्ष्य प्रतिपलम् अनुचिन्तयामि स्म

**आगतः पतिरितीरितं जनैः**
**शृण्वती चकितमेत्य देहलीम्।**
**कौमुदीव शिशिरीकरिष्यते**
**लोचने मम कदा मृगेक्षणा।**

**लवङ्गी** अधुना नु भवच्चिन्तितं सर्वमपि नित्यमेव व्यवहारपरिणतिमेष्यते।

**जगन्नाथः** लवङ्गि! वस्तुतोऽहं धन्योऽस्मि यस्य त्वं गृहिणी।

**सानुकम्पाः सानुरागाश्चतुराः शीतशीतलाः।**
**हरन्ति हृदयं हन्त कान्तायाः स्वान्तवृत्तयः॥**
**लभ्येत पुण्यैर्गृहिणी मनोज्ञा**
**तया सुपुत्रः परितः पवित्रः।**

**लवङ्गी** अलम् इदानीमेव अनया कल्पनया।

(द्वारि खटखटायते। असूयकपण्डितध्वनिः - पण्डितराज, **द्वारमुद्धाटय। वयमुच्चकुलोत्पन्नाः पण्डिताः यवन्या साकं तव विवाहं नानुमन्यामहे। तव ब्राह्मणसमाजतो बहिष्कारः क्रियते।**

**जगन्नाथः** लवङ्गि! दुर्भाग्यं भारतस्य यत्रैवंविधाः प्रवृत्तयः वैरभावं परिपोषयन्ति। अस्तु, द्वारमुघाट्य एतेभ्यः पण्डितम्मन्येभ्यः सम्यगुत्तरं ददामि।

(द्वारमुद्घाट्य) आगम्यताम् पण्डिताः। स्वागतम्।

**असूयकपण्डितः** न वयं यवनीस्पर्शपांसुलस्य भवतो गृहं प्रविशामः। भवान् हि ब्राह्मणसमाजतो बहिष्कृतः इति निर्णयसूचनार्थं वयमत्र समुपस्थिताः। पण्डितराज! किमु स्वजातौ भवान् पत्नीं प्राप्तुमसमथ आसीत्? यदेवं यवनीं गृहीतवानस्ति।

**जगन्नाथः** **'कन्यारत्नं दुष्कुलादपि ग्राह्यम्'** इति भवतामेव पण्डितानामुद्घोषः, **'उदारचरितानां तु वसुधैव कुटुम्बकम्'**- इत्यपि भवतामेव विचारः। एवं स्थिते मया कतमोऽनर्थः सम्पादितः? लवङ्गी रूपयौवनसम्पन्ना, सुशीला, पतिप्रेमपरायणा, प्रिया, प्रियवादिनी च। अन्यत् किं काम्यते पत्न्याम्? पुनश्च भवन्मते वंशगतिस्तु पत्युः कुलानुसारेण न तु पत्न्याः।

**असूयकपण्डितः** वयं सिद्धान्तवादं ननु श्रृणुमः। यदस्माभिर्निर्णीतं तत्कथितम्। (सहागतान् पण्डितान् प्रति) चलन्तु सर्वे। समाजबहिष्कृतः सन् पण्डितराजः पश्चात्तापवह्नौ ज्वलतु।

**सर्वे** ज्वलतु।

**जगन्नाथः** पण्डिताः, मदीयपाण्डित्येन खिन्ना भवन्तः अमुमवसरं प्राप्य मदीयं शोषणं कर्तुमुद्यताः। बाढम्, कुर्वन्तु भवन्तो मम बहिष्कारम्। अहं भवतः उपेक्षे। यदि शक्तिरस्ति तर्हि पाण्डित्यबलेन मां पण्डितराजितो बहिष्कुर्वन्तु।

**पण्डिता** एवंविधपतितपण्डितेन साकं को नाम शास्त्रार्थं कुर्यात्? धिक् पण्डितराजम्! गच्छामः (इति निष्क्रान्ताः पण्डिताः)

**लवङ्गी** नाथ! मत्कृते भवता एवंविधस्तिरस्कारः सोढः! मया मन्दभाग्यया भवान् कियान् कलङ्कितः?

**जगन्नाथः** अयि मूढे। त्वमपि एवं भणसि? किमेवं चिन्ताकुलासि? जीवनं सहर्षं यापय-

**अयि मन्दस्मितमधुरं वदनं तन्वङ्गि यदि मनाक् कुरुषे।**
**अधुनैव कलय शमितं राकारमणस्य हन्त साम्राज्यम्।**

**लवङ्गी** (सोच्छ्वासम्, सहासम्) सौभाग्यं मे यत् पण्डितराजस्य कवितायाः विषयोऽहम् संजाता।

**जगन्नाथः** लवङ्गि! विश्रामगृहे चलतु। तत्रैव त्वामवलम्ब्य विरचिता अन्या अपि कविताः श्रावयिष्यामि।

**लवङ्गी** चलन्तु।

**जगन्नाथः** **तिमिरशारदचन्दिरचन्द्रिका –**
**कमलविद्रुमचम्पककोरकाः ।**
**यदि मिलन्ति कदापि तदाननं**
**खलु तया कलया तुलयामहे॥**

**( ७ पण्डितराजस्य अध्ययनकक्षः )**

**लवङ्गी** अये ध्यानमग्न तपस्विन्। इदं पेयम्, गृह्यताम्।

**जगन्नाथः** अये लवङ्गि! त्वम्? देहि पेयम्! (पीत्वा) उत्तमम्। ननु त्वं तु सौन्दर्यपानस्य, पेयपानस्य युगपदेव कारणम्।

**लवङ्गी** भवतु, चिराल्लेखनीसमासक्तो भवान्। मन्ये, लेखनीतु मम सपत्नी संवृत्ता। किं लिख्यते? किं च लिखितम्?

जगन्नाथः लवङ्गि! शोभनः प्रश्नः कृतः। इमास्तिष्ठन्ति मामकीना गङ्गालहरी-प्रभृत्यः पञ्चलहर्यः। इदं जगदाभरणम्। लवङ्गि तव दर्शनात्पूर्वमेव प्रणीता एते ग्रन्थाः। शाहजहान-राजभवने स्थित्वा अयमासफविलासो विरचितः।

कैश्चिद्दिवसैश्च त्वामुद्दिश्य भामिनीविलासस्यश्शृङ्गारविलासं लिखामि। कैश्चि पद्यैस्तु त्वं परिचिता एवासि।

लवङ्गी सत्यं परिचितास्मि। न केवलमहमेव, मम सखी सम्राज्ञी चापि कैश्चित्पद्यैः परिचिते आस्ताम्।

जगन्नाथः सत्यं भणसि?

लवङ्गी एकं पद्यं ते उभे अपि चारु स्मरतः यद् भवतैकदा मां प्रति श्रावितम्, मया च सखीं प्रति, सख्या च सम्राज्ञीं प्रति। सम्राज्ञा नैकवारं तत् श्रावयितुमहमाज्ञप्ता।

जगन्नाथः किं तत्?

लवङ्गी **नितरां परुषा सरोजमाला**
**न मृणालानि विचारपेशलानि।**
**यदि कोमलता तवाङ्गकाना-**
**मथ का नाम कथापि पल्लवानाम्।**

(पण्डितराजः सस्पृहं शृणोति)

पण्डितराजः अन्यान्यपि पद्यानि त्वद्विषये नित्यं रच्यन्ते।

लवङ्गी किं किं लिखितम्?

जगन्नाथः श्रोतुकामासि?

लवङ्गी नूनम्।

जगन्नाथः सायं श्रावयिष्यामि।

लवङ्गी अधुनैव श्रोतुमिच्छामि।

जगन्नाथः सर्वं त्वद्विषये एवं लिखितम्। अनन्तरं श्रावयिष्यामि।

लवङ्गी नैव, अधुनैव श्रावयतु।

जगन्नाथः भवतु, यदि दृढस्तवाग्रहस्तर्हि शृणु।

**दरानमत्कन्धरबन्धमीष -**
**न्निमीलितस्निग्धविलोचनाब्जम्।**
**अनल्पनिःश्वासभरालसाङ्गं ,**
**स्मरामि संङ्गं चिरमङ्गनायाः॥**

**लवङ्गी** अलमलमनेन कीर्तनेन? अयं कतमो ग्रन्थो लिख्यते?

**जगन्नाथः** अयं, लवङ्गि!, रसगङ्गाधरः। अद्यत्वे अस्यापि निर्माणे लग्नोऽस्मि।

**लवङ्गी** अस्मिन् किं लिख्यते?

**जगन्नाथः** लवङ्गि, अयं मे ग्रन्थः काव्यशास्त्रीयः। ये खलु साहित्यं केवलं ललनाखेलनमेव मन्यन्ते तेषां कृते एतदुत्तरम्। अस्मिन् न्यायरीत्या काव्यसिद्धान्ताः विवेच्यन्ते।

**लवङ्गी** शोभनम्। अधुनाहमन्यस्मिन् कक्षे गच्छामि। भवान् यथेच्छं काव्यशास्त्राभ्यासं करोतु। भवन्मार्गे प्रत्यूहरूपेणावस्थातुं न मेऽभिलाषः। यदि काचिदाज्ञा स्यात्तदाकारयितव्यास्मि।

**जगन्नाथः** गच्छ, विश्रामं कुरु।

**लवङ्गी** गृहकार्याणि पूरयितव्यानि तिष्ठन्ति। भोजनादिव्यवस्थापि सम्पादनीया। विश्राम एव गृहस्थस्य नाधिकारोऽपि तु गृहव्यवस्थापि तस्याधिकारः।

**जगन्नाथः** भवतु, साधय स्वकार्याणि। (लवङ्गी, गच्छति)
(अध्ययनकक्षात् जगन्नाथस्य ध्वनिः श्रूयते सहैव गृहकार्यव्यापृताया लवङ्ग्याः ध्वनिः महानसाच्छ्रूयते)

**जगन्नाथः** **निर्माय नूतनमुदाहरणानुरूपं**
**काव्यं मयात्र निहितं न परस्य किंचित्।**
**किं सेव्यते सुमनसां मनसापि गन्धाः**
**कस्तूरिकाजननशक्तिभृता मृगेण?॥**

**लवङ्गी** अहो मे सौभाग्यं यस्याः पतिरेवंविधः पण्डितः कविः काव्यमर्मज्ञश्च। यथा काव्यम्, तथैव कण्ठोऽपि।

**जगन्नाथः** **मननतरीतीर्णविद्यार्णवो जगन्नाथपण्डितनरेन्द्रः।**

**रसगङ्गाधरनाम्नीं करोति कुतुकेन काव्यमीमांसाम्॥**

**लवङ्गी** भोजनं सम्पन्नम्। किन्तु कथं पत्युः काव्यशास्त्रसाधनायां विघ्नमुपस्थापयेयम्?

**जगन्नाथः** **रसगङ्गाधरनामा सन्दर्भोऽयं चिरं जयतु।**
**किंच कुलानि कवीनां निसर्गरम्यञ्चि रञ्जयतु।**

**लवङ्गी** अधुना तु भोजनं दातुं गच्छाम्येव। शरीरमाद्यं खलु धर्मसाधनम्।

**( ८ पण्डितराजस्य विश्रामकक्षः )**

**कपटी पण्डितः** (द्वारि) पण्डितराज! पण्डितराज!

**जगन्नाथः** ननु पश्य लवङ्गि कोऽस्ति द्वारि!

**लवङ्गी** (गत्वा प्रतिनिवृत्य) कश्चित्पण्डितो भवन्तं द्रष्टुकामोऽस्ति।

**जगन्नाथः** सादरं प्रवेशयैनम्।

**लवङ्गी** (पण्डितमानीय) एते महानुभावाः समायाताः।

**जगन्नाथः** स्वागतं भवतः। आदिशतु किमर्थमागमनम्?

**पण्डितः** पण्डितराज, अस्माभिरद्य सायं यमुनातीरे एका विचारगोष्ठी आयोज्यते यस्यां काव्यलक्षणमधिकृत्य विचारो विहितः स्यात्। अपि नाम अत्रभवांस्तस्यां समुपस्थातुं सुलभः स्यात्?

**जगन्नाथः** ननु आह्लादविषयोऽयं मे। मया सद्य एवेमं विषयमधिकृत्य किंचिद्विचारितमप्यस्ति। 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति मे काव्यलक्षणम्। विदुषां पुर इदमेव लक्षणं स्थापयिष्यामि।

**असूयकपण्डितः** (द्वारि खटखटाकरोति) लक्ष्मीधर! लक्ष्मीधर! अरे किं पण्डितराजस्यान्तःपुरे तिष्ठसि? बहिरायाहि। किमु शुद्धाशुद्धविवेकस्तव नितरां विलुप्तः?

**जगन्नाथः** पण्डितवर किमिदम्? अयं तु स एव कुटिलाचार्यो द्वारि भवन्तमाकारयति। भवान् किं तस्य सुहृद्वरः?

**कपटी पण्डितः** स हि अस्माकमुपदेष्टा। तस्याज्ञापालनेनैव अस्माकं योगक्षेमं सिद्ध्यति।

**असूयकपण्डितः** (द्वारि) अरे! लक्ष्मीधर! कुत्र विलीनः? कथं नायासि?

**कपटी पण्डितः** मया साध्यते इदानीम्। भवान् यथाकालं गोष्ठ्यामायातु। (बहिरागत्य) कुटिलाचार्य! मया भवत्सन्दिष्टं पण्डितराजाय निवेदितम्। स यथाकालं यथास्थानं विचारगोष्ठ्यां समुपस्थास्यति।

**असूयकपण्डितः** त्वया दूरत एव कथं न सूचितः पण्डितराजः? किमु तत्र जलमपि गृहीत्वागतोऽसि?

**कपटी पण्डितः** जलादिग्रहणस्य भवता अवकाश एव कदा दत्तः? अनुपदमेव माम् आकारयितुं प्रवृत्तः।

**असूयकपण्डितः** अलमधुनाधरोत्तरेण। इदानीं पश्य मे योगमैश्वरम्! पश्यामि, कैर्विद्वद्भिस्साकं काव्यलक्षणं विमृशति पण्डितराजः? (कुटिलं हसति)

**( ९ यमुनातीरः )**

**पण्डितराजः** (स्वगतं) अत्र तु कोऽपि नास्ति? इदमेव स्थानं विचारगोष्ठ्यर्थं निर्दिष्टमासीत्तेन पण्डितेन! (एकं पुरुषं विलोक्य) अयमेको जनो दृश्यते। अमुमेव पृच्छामि। (प्रकाशं) किं भोः भद्रपुरुष। किमु अद्य अत्र काचिद् विचारगोष्ठी संयोज्यते?

**पुरुषः** नाहं जानामि।

**पण्डितराजः** (इतस्ततः परिक्रम्य) किं करोमि? **नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः?**

**असूयकपण्डितः** (आगच्छन्) पण्डितराज! किमन्विष्यतेऽत्र यमुनातीरे? किमु विचारगोष्ठ्यामागतोऽसि काव्यलक्षणविमर्शार्थम्। इदानीं मत्कृपया त्वयैतदर्थं कष्टं नैव सोढव्यं भविष्यति। गच्छ! गृहं गत्वा लवङ्ग्या साकं काव्यलक्षणं विचारय। कोऽपि विद्वान् तवच्छायामपि स्प्रष्टुं नानुमतो भविष्यति।

(सव्यङ्ग्यं) काव्यलक्षणं विचारयितुं यमुनातीरे समायातो वराकः। (इति गच्छति)

**जगन्नाथः** हुं, इयं ते अकारणाविष्कृतवैरदारुणस्य लीला?

**रे खल तव खलु चरितं**
**विदुषां मध्ये विविच्य वक्ष्यामि।**
**अथवालं पापात्मन्**
**कृतया कथयापि ते हतया॥**

**( १० पण्डितराजस्य विश्रामगृहम्। रुग्णा लवङ्गी पण्डितराजश्च )**

**जगन्नाथः** लवङ्गी, कीदृशी अवस्था?

**लवङ्गी** नाथ, दाहज्वरो महान्।

**जगन्नाथः** औषधं गृहीतम्?

**लवङ्गी** गृहीतम्। 'चित्रमीमांसाखण्डनं' सम्पूर्णम्?

**जगन्नाथः** सम्पूर्णम्।

**लवंगीः** महान् खेदो यदहं भवतां शास्त्रसाधनायां सहयोगं न विदधामि। किं कुर्याम्? रोगग्रस्तास्मि। ननु भोजनादेर्व्यवस्था तु रुचिरा भवताम्?

**जगन्नाथः** सर्वमपि व्यवस्थितं लवङ्गि! यदि त्वं स्वस्थतां भजसि?

**लवङ्गी** ह्यः पंडितानां समूहो द्वारे समागत्य किं कथयति स्म?

**जगन्नाथः** न किमपि, एवमेव प्रलपति स्म।

**लवङ्गी** किं गोपनेन? मया श्रुतं सर्वमपि। मत्कृते भवानेवंविधं तिरस्कारं सहते – इति ज्ञात्वा दुःखदावानलेन दह्यते मे हृदयम्। अहं तु परमेशं प्रार्थये यन्मां सः शीघ्रमेव संसारादुत्थापयेत्। मयि उपरतायां तु भवान् समाजे प्रतिष्ठां लप्स्यते।

**जगन्नाथः** कमलिनि, अनभिज्ञैः बकैरवहेलिता सती कथं चेतो मलिनीकरोषि? एतेषां कूपमण्डूकानां क्षुद्रविचारैर्यदि

विमनायमाना भवसि तर्हि खेदः। नन्वहं पण्डितराजस्तव सहजीवी। स्वस्था भव। औषधं गृहाण।

**सखी** सखि, इदमौषधम्! (औषधं ददाति)

**लवङ्गी** औषधं तु गृहामि। किन्तु वचनं मे दीयताम्।

**जगन्नाथः** कीदृशं वचनम्?

**लवङ्गी** मयि उपरतायां स्वजातीयया कयाचित् साकं भवान् विवाहं करिष्यतीति।

**जगन्नाथः** अयि प्रमत्ते! किं प्रलपसि? नैवं भवितुं शक्यते।

**लवङ्गी** अन्यदपि कामये।

**जगन्नाथः** किं तत्?

**लवङ्गी** मय्युपरतायां मम स्मृत्या न खिद्यसे इति।

**जगन्नाथः** अये, किमेवमसम्बद्धं प्रलपसि? किमप्यन्यद्विचारय।

**लवङ्गी** शाहजहानसम्राजः पार्श्वे गमनस्यानुमतिर्लब्धा भवता न वा?

**जगन्नाथः** किं भणामि लवङ्गि! औरंगजेबेन यदा प्रभृति सम्राट् बन्दीकृतस्तदाप्रभृत्येव सम्राजा साकं संवादो नाभूत्। आश्रयदाता बन्दी, आश्रयभूता च त्वं रुग्णा। कीदृशी विडम्बना?

**लवङ्गी** श्रूयते सम्राडपि रुग्णः?

**जगन्नाथः** सर्वेऽपि मम परिचिताः खिन्ना रुग्णा वा। एकोऽहमेव मन्दभाग्योऽस्मि यो रुग्णो नास्मि शरीरेण, किन्तु लवङ्गि! मनसाहमपि रुग्णः। कदाचित्तु अहमेकान्ते रोदिमि इमां दुरवस्थां निरीक्ष्य। अधुना कालः परिवर्तितः।

**लवङ्गी** सर्वमक्षिणी निमील्य सोढव्यम्।

**प्रशंसकपण्डितः** (प्रविश्य) वज्रपात पण्डितराज! वज्रपात! सम्राट् शाहजहानो दिवंगतः। यादृशी उदारता तेन प्रदर्शिता अधुना सा असम्भवा। अन्तिमदर्शनाय बहवो जनाः गच्छन्ति।

**जगन्नाथः** हा कष्टम्! मदीयः आश्रयदाता, मदीयं मित्रं, मदीयो हितैषी शाहजहानः दिवंगतः? मृत्यो! त्वं कमपि न क्षमसे? लवङ्गि, त्वं विश्रामं कुरु। अहं दिवंगतस्य सम्राजोऽन्तिमं दर्शनं विधाय आयामि।

**लवङ्गी** ननु अहमपि चलामि।

**जगन्नाथः** मुग्धे! त्वं दुर्बला, रुग्णा च। अत्रैव तिष्ठ।

**लवङ्गी** नैवम्। सम्राट् मयि अत्यन्तं वात्सल्यं निदधाति स्म। अहं तस्यान्तिमं दर्शनं कर्तुम् अभिलषामि।

**जगन्नाथः** यथा त्वमभिलषसि। एहि, चलावः।

**सखी** अहमपि सहैव चलामि। रुग्णाया भवत्याः साहाय्यमाचरिष्यामि।

**लवङ्गी** चलतु। (सर्वे गमनं रूपयन्ति)

**( ११ मार्गे )**

**जगन्नाथः** अपारो जनसमूहः। औरंगजेबेन अतीव उदारता प्रदर्शिता यत् शाहजहानस्यान्तिमदर्शनकारकाः न बन्दीकृताः।

**लवङ्गी** शनैर्वदन्तु। कश्चित् गुप्तचरःशृणुयात्। व्यर्थमेव कष्टं स्यात्। अयं पुरस्तात् स एव पण्डितः समूहेन सहितः समायाति न जाने किं करिष्यति।

**पण्डित असूयकः** भणतु पण्डितराजः! कीदृशं स्वास्थ्यं श्रीमतः? कुत्र गच्छति भवान्? ननु अद्य तु लवङ्गी अपि सहैव। सह नाववतु सह नौ भुनक्तु। पण्डितानां राजन्। शोभतेतराम् अनया साकम् भवान्। धन्योऽसि।

**जगन्नाथः** अरे शशकाः, कथं मृगेन्द्रस्याग्रे कूर्दनमुत्फालनं कुरुथ? मानवतामङ्गीकृत्य किंचित् ब्रूत।

**पण्डित असूयकः** मृगेन्द्रस्याग्रे मानवता? मृगेन्द्रस्तु नरभक्षी। अत एव तस्याखेटः क्रियते नरैः सकौशलम्। पण्डितराज! अधुना तु भवतामाश्रयदाता पण्डितराजपदवीदाता च शाहजहानोऽपि दिवंगतः। अधुना कुत्र गमिष्यन्ति अत्रभवन्तः?

**जगन्नाथः** (व्यङ्ग्येन) भवच्चरणशरणं ग्रहीष्यामि, असूयाशिक्षां च ग्रहीष्यामि! पण्डिताः, विद्वान् सर्वत्र पूज्यते। ननु दुर्भाग्यं मे यत् शाहजहानः मृतः, किन्तु नाहं निराश्रितः।
कामरूपाधीश्वरः प्राणनारायणो बहुधा मां प्रार्थयते स्वसभायामुपस्थातुम्।

**पण्डित असूयकः** (सव्यङ्ग्यम्) अहह! ननु पण्डितनरेन्द्र! तस्य क्षत्रियस्य सभायां राजकविरूपेण भवान् स्थास्यति, अनया लवङ्ग्या सह। लवङ्गी तु तत्र व्याधिरस्ति व्याधिः। अधुना तु पण्डितराज! मालां गृहाण, गङ्गातटे च स्वगङ्गालहरीं पठ।

**लवङ्गी** (मूर्च्छिता) नाथ मया साकं सर्वत्रैव भवान् अवमानं लभते। केयं मम मन्दभाग्यता?

**पण्डित असूयकः** ननु अभिनयेऽपि कुशला लवङ्गी?

**जगन्नाथः** अरे मावनरूपधारिणो दानवाः। दूरीभवन्तु अन्यथा मत्तो दुष्टः कोऽपि न स्यात्।

**पण्डित असूयकः** त्वत्तः दुष्टोऽस्त्येव कः, यो हि यवनीपाशबद्धः संजातः।

**जगन्नाथः** अलं बहुजल्पितेन। अयमहं दण्डाघातेन युष्माकं चिकित्सां करोमि पशुबलेन। इदानीं कुत्र धावथ?
('पण्डितराज! पूर्वं तु लवङ्ग्याश्चिकित्सां कुरु' इति ध्वनिं कुर्वन्तः पण्डिताः पलायिताः)

**लवङ्गी** (नेत्रे उन्मील्य) नाथ!

**जगन्नाथः** लवङ्गि, एतेषां प्रलापे उपेक्षाबुद्धिं कुरु। अकारणाविष्कृतवैरदारुणा एते।

**लवङ्गी** नाथ कष्टं मे। पण्डितानां व्यङ्ग्यवचांसि श्रोतुमसमर्था इवास्मि।

**( नेपथ्ये-लूनं मत्तमतङ्गजैः कियदपि च्छिन्नं तुषारार्दितैः )**

**लवङ्गी** नाथ! मत्कृते भवता बहु कष्टं सोढम्!

**( नेपथ्ये-शिष्टं ग्रीष्मजभानुतीक्ष्णकिरणैः भस्मीकृतं काननम् )**

**लवङ्गी** नाथ! सम्राडपि गतः।

**( नेपथ्ये-एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशः )**

**लवङ्गी** नाथ क्षन्तव्यास्मि, सुखी स्याः।

**( नेपथ्ये-हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते )**

**लवङ्गी** ही (हिक्काशब्दः। मरणम्) (करुणसंगीतम्)

**जगन्नाथः** लवङ्गि! लवङ्गि! प्रतिवचनं देहि। (रोदनम्) लवङ्गि, अशरणं मां हित्वा कुत्र गताऽसि? कथं न गिरमङ्गीकुरुषे? (रोदनम्) अये क्षुद्रविचाराः! युष्माभिर्मम लवङ्गी खादिता। विधे! एकतो मम जीवनकाननस्य शान्तिः शाहजहानमृत्युना भग्ना, अपरतः क्षुद्रविचारैः लोकैः मम जीवनसुखं छिन्नम्, अस्मिन्नपि एषा लवङ्गी मृत्युदावानलेन कवलिता। (रोदिति)

(नेपथ्ये भैरवरागेण सकरुणं श्लोकाः पठ्यन्ते गायकेन)

**निर्वाणमङ्गलपदं त्वरया विशन्त्या**
**मुक्ता दयावति दयाऽपि किल त्वयासौ।**
**यन्मां न भामिनि निभालयसि प्रभात-**
**नीलारविन्दमदभंङ्गिमदैः कटाक्षैः॥**

**धृत्वा पदस्खलनभीतिवशात् करं मे**
**या रूढवत्यसि शिलाशकलं विवाहे।**
**सा मां विहाय कथमद्य विलासिनि द्याम्**
**आरोहसीति हृदयं शतधा प्रयाति॥**

दैवे पराग्वदनशालिनि हन्त जाते
याते च सम्प्रति दिवं प्रति बन्धुरत्ने।
कस्मै मनः कथयितासि निजामवस्थां
कः शीतलैः शमयिता वचनैस्तवाधिम्॥

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाताः
विद्यापि खेदकलिता विमुखीबभूव।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव॥

### ( १२ वाराणसी, गङ्गातटः )

**जगन्नाथः** (स्वगतम्) चिरात् दृष्टा भगवतो भूतभावनस्य नगरी वाराणसी। इहैव मया कदाचित् शास्त्राण्याकलितानि, इहैव सर्वेऽपि नित्यविधयः संसेविता। (निःश्वस्य) परमद्य अत्रापि न शान्तिं लभे! हृदयाधिदेवते लवङ्गि! ननु पश्यसि स्ववल्लभस्य दशाम्?

**बटुः** (प्रविश्य) भगवन्! प्रणमामि। किमु अहं पण्डितराजजगन्नाथ-महाभागानां दर्शनं करोमि?

**जगन्नाथः** पण्डिराजस्तु यदासीत् तदासीत्। अधुना तु अनाथो जगन्नाथ एव। को भवान्।

**बटुः** अहं पिपठिषुरस्मि। मया भवल्लिखिताः रसगङ्गाधर-मनोरमाकुचमर्दनशब्दकौस्तुभचित्रमीमांसाखण्डनादयो ग्रन्थाः श्रुताः। तद्विषये विशेषतो ज्ञानमर्जयितुमिच्छामि मया श्रुतमासीत् यद्भवन्तः गङ्गातटमधिवसन्ति।

**जगन्नाथः** सौम्य! लप्स्यसे ज्ञानम्। किन्तु किं त्वं जानासि यदहं पण्डितैर्बहिष्कृतोऽस्मि। त्वमपि विद्याग्रहणात्पूर्वमेवावधारय यदेवम्भूतस्य मम सकाशे स्थितिरुचिता न वा?

**बटुः** अहं तु ज्ञानार्थी अस्मि। ज्ञानस्य सम्मुखे जातिव्यक्तिवर्णोत्तर-दक्षिणप्रभृतीनि तत्त्वानि न किमपि महत्त्वं धारयन्ति। विवाहादिकं व्यक्तिगतमेव तत्त्वम्। यदि समाजं कश्चित् युगलं न बाधते

तर्हि तस्य बहिष्कारो व्यर्थ एव। अहं तु भवदीयजीवनेन नितान्तं प्रभावितोऽस्मि।

**जगन्नाथः** सौम्य! प्रबुद्धोऽसि। त्वादृशं शिष्यं प्राप्याहं नितरां प्रीतोऽस्मि कामये च यत्त्वादृशाः युवकाः अस्यां पृथिव्याम् **'उदारचरितानां तु वसुधैव कुटुम्बकम्'** इति भावनां वास्तविकरूपेण प्रसारयन्तु। अहमपि यावज्जीवं क्षुद्रविचारैः साकं योत्स्ये।

**शिष्यः** भगवन्! एतदेव भविष्यति। अधुना भवन्मुखेनैव भवन्निर्मितगङ्गालहरीम् अंशतः श्रोतुमिच्छामि।

**जगन्नाथः** अवश्यमेव श्रोष्यसि। लवङ्गी अपि गङ्गालहरीमौत्सुक्येन शृणोति स्म। हा लवङ्गि! त्वं क्षुद्रविचारैर्भक्षिता। किन्तु अहमपि एवमादर्शं पोषयिष्यामि यस्याग्रे जातिवर्णादिसङ्कुचितभावना न स्थास्यति।

**शिष्यः** भगवन्। गङ्गालहरीपदं श्रावयति स्म भवान्।

**जगन्नाथः** ओः! चतुरोऽसि। शृणु –

**अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा**
**विलोलद्वानीरं तव जननि तीरं श्रितवताम्।**
**सुधातः स्वादीयः सलिलमिदमातृप्ति पिबतां**
**जनानामानन्दः परिहसति निर्वाणपदवीम्॥**

(इति भावविलीनो भवति)

**शिष्यः** (स्वगतं) अहो!निमग्नोऽत्रभवान् गङ्गालहर्याम्! (प्रकाशं) भगवन् अतीव आनन्ददायिनीयं लहरी। धन्योऽस्मि यः श्रीमतां मुखादेवेमां श्रुतवान्। को नाम मानवो भवत्कवितामाधुरीं निपीय आनन्दमग्नो न स्यात्?

**मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा**
**कदाचित् केषांचित् न खलु विदधीरन्नपि मुदम्।**
**ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो**
**न येषामानन्दं जनयति जगन्नाथभणितिः॥**

**वाचकध्वनिः** एवंभूत आसीत् पण्डितराजो जगन्नाथः यस्य लोकोत्तरं व्यक्तित्वं पाण्डित्येन, कवित्वेन, विलासेन, ज्ञानेन निर्भीकत्वेन, औदार्येण च मण्डितं सत् सर्वदैव विश्वस्य मानवान् आह्लादयिष्यति।

ससङ्गीतं गीयते-

**विश्वबन्धुत्वमुद्घोषयत् पावनं**
**विश्ववन्द्यैः चरित्रैर्जगत्पावयत्।**
**विश्वमेकं कुटुम्बं-समालोकयत्**
**भूतले भाति मेऽनारतं भारतम्!॥**
**वाजिराजिं गजालिं तिरस्कुर्वता**
**पण्डितेन्द्रेण यस्मिँल्लवङ्गी वृता।**
**सुस्तनी मस्तकन्यस्तहस्ता प्रिया**
**भूतले भाति तन्मामकं भारतम्॥**
**बुद्बुदाभा नृपा यत्र यातां लयं**
**यत्र विद्वान् कविश्चामरो राजते।**
**त्यागिनो यत्र नैव म्रियन्ते क्वचिद्**
**भूतले भाति तन्मामकं भारतम्॥**
**शोषितो नात्र कश्चिद्भवेत्केनचित्**
**व्याधिना पीडितो नो भवेत्कश्चन।**
**नाऽत्र कोऽपि व्रजेद् दीनतां हीनतां**
**मोदतां मे सदा पावनं भारतम्॥**

## Panditraj Jagannath
### ———— a brief introduction

India has been the birth place of innumerable great men. Their glorious legends have contributed to the pride of the nation. Punditraj Jagannath is one of those great men who conveyed the message of humanity neglecting narrow barriers of caste, colour, religion and time. Pandit Jagannath is one of them that conveyed the message of humanity neglecting caste, community, creed and contemporary social set up on the one hand and challenged mean thoughts and mentality on the other. He married Lavangee, a girl brought up in the family of the Moghul Emperor Shahjahan. Pandit Jagannath's large-heartedness could not be appreciated by South Indians and they declared him an outcast. In utmost remorse, Pandit Jagannath ended his life in the lap of Ganga at Varanasi. The theme is well developed by the great scholar Padma Shri Dr. Ramakant Shukla in his Sanskrit play entitled: '***Panditrajiyam***'. It is my humble attempt to translate the play in Hindi. I owe to Dr. Rakesh 'Ravi' for permitting me to borrow Hindi translations of verses by Panditraj Jagannath from his book: '***Jagannath Shatakam***'.

15th Aug. 2015.

Ranjana 'Rashmi'

# पंडितराज जगन्नाथ

## (डा. रमाकान्त शुक्ल रचित उ.प्र.संस्कृतसंस्थान द्वारा पुरुस्कृत ध्वनि रूपक पंडितराजीयम् का हिंदी अनुवाद)

पात्र-परिचय

**शाहजहां-** दिल्ली के मुगल सम्राट्, जगन्नाथ के आश्रयदाता
**सम्राज्ञी-** दिल्ली के मुगल सम्राट् शाहजहां की पत्नी
**जगन्नाथ-** पंडितराज, नाटक का नायक, शाहजहाँ की सभा का पंडित
**लवंगी-** शाहजहाँ के परिवार में पली कन्या, जगन्नाथ की प्रेयसी व पत्नी
**सेवक समूह-** मंत्री, सामंत, प्रतिहारी व अन्य सेवक तथा सेविका
**पंडित समूह-** असूयक पंडित, प्रशंसक पंडित, तटस्थ पंडित
**अन्य पात्र-** लवंगी की सखी तथा पंडितराज जगन्नाथ का शिष्य-बटुक
**देशकाल** मुगल सम्राट् शाहजहां का शासन काल
**विधा** रेडियो नाटक-ध्वनि रूपक

रंजना 'रश्मि'

# पंडितराज जगन्नाथ

**सूत्रधार** यह भारतभूमि अनेक महापुरुषों की जन्मभूमि रही है। यह भारत देश बहुत से महापुरुषों की यश गाथा से गौरवान्वित रहा है। पंडितराज जगन्नाथ भी उन्हीं महापुरुषों में से एक हैं, जिन महापुरुषों ने जाति, धर्म, वर्ण, देशकाल की उपेक्षा करते हुए मानवता का संदेश दिया तथा क्षुद्र विचारों का साहसपूर्वक खंडन किया। पंडितराज जगन्नाथ एक ऐसे महान कवि हुए हैं जिनका बहुत से राजाओं ने सम्मान किया है। जिनकी रचनाएँ आज भी कवि जनों के हृदय को प्रसन्न कर देतीं हैं। यह शहंशाह शाहजहां का सौभाग्य था कि पंडितराज जगन्नाथ ने उनकी सभा को अलंकृत किया।

**( द्वार पर रथ के रुकने का स्वर सुनाई देता है तथा बाद में पगध्वनि भी सुनाई देती है )**

**( १-शाहजहां का राजमहल )**

**प्रतिहारी** आप कौन हैं? यहाँ आने का आपका क्या प्रयोजन है?

**आगन्तुक** प्रतिहारी, मैं श्रीमान् पेरमभट्ट का पुत्र जगन्नाथ हूँ। मेरे पिताजी श्रीमान जहांगीर जी की सभा में निवास किया, विभिन्न शास्त्रों का अध्ययनकर, उनके महाप्रयाण के पश्चात्, मैं उदयपुर के महाराज जगतसिंह जी की सभा में रहने के पश्चात् पुनः दिल्ली के सम्राट की छत्रछाया में काव्य साधना की इच्छा से आया हूँ। क्या बादशाह भी मुझसे मिलने के इच्छुक हैं? कृपया उनसे पूछ कर यह मुझे बताइये क्योंकि उन्होने ही मुझे यहाँ यह पत्र भेजकर आमंत्रित किया है। यह रहा उनका पत्र।

**प्रतिहारी** अरे, क्या मैं पंडित जगन्नाथ के दर्शन कर रहा हूँ? निश्चित रूप से यह राजभवन धन्य हो गया जो स्वयं विद्वत्ता यहां पर उपस्थित हुई है। आप क्षण भर प्रतीक्षा करें, मैं अभी आपके आगमन की सूचना शहंशाह को देता हूँ।

**(जाता है। पदचाप की ध्वनि।)**

(शाहजहाँ से) स्वामी श्रीमान् पेरमभट्ट के पुत्र जगन्नाथ पंडित उदयपुर से आये हैं।

**शाहजहाँ** अच्छा क्या जगन्नाथ पंडित आ गये हैं? निश्चित ही यह मुगल शासन का परम सौभाग्य है जो जगन्नाथ पंडित जैसा श्रेष्ठ विद्वान् स्वयं ही इस सभा में आ गया है। हमने ही उन्हें यहाँ आने का निमंत्रण भेजा था।

**प्रतिहारी** जी हाँ, उन्होने भी मुझे वह पत्र दिखाया है।

**शाहजहाँ** प्रतिहारी, हमने अपने पिता के शासनकाल में इनकी सुमधुर कविता का रसास्वादन किया है। शीघ्र जाकर उनको आदरपूर्वक भीतर लेकर आएँ। इस तरह देर तक महाकवि द्वार पर खड़े रहें यह हमारे गौरव के विरु) है। शीघ्र जाओ।

पृष्ठ-२

**प्रतिहारी** जो आज्ञा महाराज। (जाता है। पदचाप की ध्वनि।) (पंडितराज से) पंडित श्रेष्ठ, बादशाह उत्सुक होकर आपकी प्रतीक्षा कर रहे हैं। आइये।

**जगन्नाथ** मार्ग बताइये।

**प्रतिहारी** इधर से आएँ। बादशाह आपकी प्रशंसा कर रहे थे। अरे, आपकी प्रशंसा क्या करना, विद्वान् की प्रशंसा करने से तो स्वयं की ही प्रतिष्ठा बढ़ती है। इधर से आइये, आपकी प्रतीक्षा में बादशाह आसन से उठकर इधर-उधर टहल रहे हैं।

**जगन्नाथ** महाराज की जय हो!

**शाहजहाँ-** (हाथ पकड़कर) अरे पंडितप्रवर जगन्नाथ बहुत दिनों बाद दिखाई दिए हो। आप कुशल तो हैं? यहाँ आने में कष्ट का अनुभव तो नहीं हुआ?

**जगन्नाथ** महाराज! कष्ट कैसा? कष्ट तो आपको दे रहा हूँ।

**शाहजहाँ-** नहीं, पंडितप्रवर ऐसा नहीं है। आपसे मिलकर हम निश्चित ही धन्य हो गये हैं। पिताजी के महाप्रयाण के पश्चात् जबसे आप मुगल सभा को छोड़ कर गए हैं तबसे लेकर आज तक हमें आप जैसा विद्वान् प्राप्त नहीं हुआ है। आज आप के द्वारा यहाँ आगमन की प्रार्थना स्वीकार कर लेने से हम बहुत ही प्रसन्न हुए हैं।

**जगन्नाथ** आपके पूज्य पिताजी के महाप्रयाण के पश्चात् आगरा नगर में पूरी तरह अव्यवस्था फैली हुई थी। आपको तो यह पता है कि साहित्य-सृजन काव्य साधना, काव्य-रचना आदि के लिए पूरी तरह शांति की अपेक्षा होती है। इसीलिये मैं उदयपुर के राजा जगत सिंह जी की सभा में चला गया था। और वहीं पर मैंने काव्य की रचना की है। कुछ दिनों पूर्व आपका संदेश प्राप्त करके मैंने यहॉ आने का मन बना लिया था। और आज यहाँ आकर आपको कष्ट दे रहा हूँ।

**शाहजहाँ** अरे ऐसा नहीं है। कष्ट तो आपने उदयपुर के राजा जगत सिंह जी को दिया है जिन्हें आपकी याद में नींद भी नहीं आती होगी। उदयपुर के राजा आपके द्वारा रचे गए श्रेष्ठ काव्य 'जगदाभरण' का स्मरण करते हुए कैसे निद्रा का सुख प्राप्त करेंगे। पंडितराज, जगतसिंह जी का जो वर्णन आपने उस काव्य में किया है कुछ हमें भी सुनाइये।

**जगन्नाथ** महाराज! दूसरे राजा के विषय में आप क्यों सुनना चाहते हैं?

**शाहजहाँ** पंडितप्रवर! आप तो यह जानते हैं कि कविता में अपने पराये की भावना नहीं होती है। यदि काव्य सही रूप से काव्य है तो वह सभी के लिए काव्य ही होता है भले ही वह किसी का भी आश्रय लेकर रचा गया हो। कुछ सुनाएँ-

**जगन्नाथ** वास्तव में आप सहृदय हैं सुनें-

**बिरला ही विद्वान सभा में पुलकित होता**
**अन्य कोई विद्वान जो महिमा मंडित होता**
**नहीं आप जैसा उदात्त मन देखा राजन**
**अन्य रूप सौंदर्य कथा मद पिये समुद मन**
**अधर रूपसी सी सुन्दर मेरी यह कविता**
**जाने किसकी वाणी करे प्रवाहित सरिता**

**शाहजहाँ** उचित ही कहा गया है।

**जगन्नाथ-**

**पृथ्वी की सुन्दरता है दोनों की जननी**
**गुणग्राहक की या ईर्ष्या से पीड़ित जनकी**
**गुणग्राही के अधरों पर मुस्कान की रेखा**
**ईर्ष्या से पीड़ित को प्रतिपल घुलते देखा**
**जग का चलन देख मैं कविता नहीं सुनाता**
**जगत सिंह को जाग्रत रखें सदा विधाता**

**शाहजहाँ** यह जगत सिंह जी निश्चित ही धन्य हैं जो आपकी लेखनी का विषय बने हैं। और जो वृद्धावस्था और मृत्यु के भय से परे यश रूपी शरीर के माध्यम से चिरकाल तक अथवा कहें तो जब तक सृष्टि रहेगी तब तक इस विश्व में विद्यमान रहेंगे।

**जगन्नाथ** जो कवियों का सत्कार करता है वह भी अमर हो जाता है।

**शाहजहाँ** पंडितप्रवर! अभी आपने भोजन भी नहीं किया होगा। मैं तो आपके अमृत की वर्षा करने वाले वचनों को सुनकर आपके भोजन के विषय में भूल ही गया।

**जगन्नाथ** मुझे भोजन की चिंता नहीं है। विद्वानों के लिए प्रयुक्त मधुर वचन ही उनका भोजन होता है। जिससे उनकी स्वाभिमान की भूख शांत होती है। सत्कार के जल से ही उनकी पिपासा शांत होती है। फिर भी मेरे पास सब कुछ है। उदयपुर के राजा ने अश्वरथ पर विभिन्न प्रकार के पकवान आदि रखवाकर ही मुझे विदा किया था। और वहीं पर मेरी काव्य आदि अन्य आवश्यक वस्तुएँ भी रखी हुई हैं।

**शाहजहाँ** वह रथ कहाँ है?

**जगन्नाथ** राजभवन के पास ही है।

**शाहजहाँ** प्रतिहारी, शीघ्र ही सारथी का तदनुरूप स्वागत करो तथा उसे भोजन वस्त्रादि प्रदान करो। पंडितराज! आपका सामान भी आपके लिए सुरक्षित कक्ष में पहुँचा दिया जाएगा।

**जगन्नाथ** मैं तो आपके साथ वार्तालाप में भूल ही गया कि सारथी भी मेरे साथ है। अब आप भी विश्राम करें और मैं भी सोने के कमरे में जाता हूँ।

**शाहजहाँ** ठीक है, प्रातःकाल सभा में आपके दर्शन करूंगा।

**जगन्नाथ** शुभ रात्रि। प्रतिहारी मेरे निवास स्थान का रास्ता दिखाने को किसी सेवक को भेजें।

**प्रतिहारी** पंडितराज इधर से आऐं यहाँ पर आपकी आज्ञा का पालन करने के लिए सेवक उपस्थित है।

**सेवक** पंडितश्रेष्ठ को प्रणाम करता हूँ।

**जगन्नाथ** कल्याण हो।

**प्रतिहारी** मैं सारथी के लिए व्यवस्था करने जाता हूँ।

**जगन्नाथ** ठीक है, व्यवस्था करें।

**सेवक** इधर से आएँ, इधर ही आपके लिए निवास की व्यवस्था की गई है।

**जगन्नाथ** ठीक है, अरे, निवास स्थान तो बहुत ही सुन्दर है।

**सेवक** भगवन्! आप यहाँ आसन पर बैठें, क्या मैं आपके पांव दवाऊं?

**प्रतिहारी** (प्रवेश करके) ये आपके ग्रंथादि रथ से ले आये गए हैं।

**जगन्नाथ** ठीक है, प्रतिहारी जाओ तुम भी विश्राम करो।

**प्रतिहारी** जैसी आपकी आज्ञा।

**जगन्नाथ** (ग्रंथ को देखते हुए स्वगत) यह गंगालहरी है, यह अमृत लहरी है, यह करुणा लहरी है, और यह लक्ष्मी लहरी तथा सुधा लहरी है। ये सब मेरी प्रभु भक्ति में लीन रहने का प्रमाण हैं। और ये संसार के आभूषण श्रेष्ठ गुणों के सम्मान का भी प्रमाण है।भगवती गंगे–

**स्मरण गंगा का करलो आत्मा को शांति मिलती**
**नाम गंगा का पुकारो पाप-क्षय से मुक्ति मिलती**
**नाम पावन गंगा का सुन लो तो मन आनन्द पाये**
**अधर पर हो नाम गंगा जब भी अंतिम श्वास आये**

## (२-शाहजहाँ की राज्यसभा)

**उद्घोषक** सावधान हो जाएँ, महाराजधिराज सम्राट् शाहजहाँ पधार रहे हैं।

**सामन्त** महाराज की जय हो।

**शाहजहाँ** (सिंहासन पर बैठकर) सामन्तजन अपना आसन ग्रहण करें। मंत्रिवर, आज हमें पंडितप्रवर जगन्नाथ का सम्मान करना हैं, अतः सेवक को भेजकर उन्हें आदरपूर्वक ले आया जाए।

**मंत्री** जैसी महाराज की आज्ञा।

**शाहजहाँ** निश्चित ही यह मुगलवंश धन्य है, जिसके शासन में न केवल शासन की दृष्टि से भारत की उन्नति हुई है वरन्

साहित्य की दृष्टि से भी उसकी श्रेष्ठता दिखाई देती है। यह हमारा परम सौभाग्य है कि हमारे (मुगलों के) शासन काल में लोकनायक तुलसी दास, अब्दुलरहीम खानखाना, जगन्नाथ पंडित जैसे अनेक विद्वानों और कवियों ने भारतभूमि को सुशोभित किया है।

**मंत्री** उचित ही कहा है आपने। कवियों और कलाकारों के प्रति आपका भी असीम स्नेह है। इसीलिए तो अर्ध रात्रि में भी कवियों का आदर किया जाता है।

**शाहजहाँ** मंत्रिवर! मेरे विचार से तो कवियों का सान्निध्य मयूर सिंहासन से भी अधिक मूल्यवान है क्योंकि मयूर सिंहासन पर बैठकर तो हम बाहरी रूप से शोभायमान होते हैं किंतु कवियों की समीपता का अनुभव करके हम आंतरिक रूप से सौन्दर्य का अनुभव करते हैं।

**मंत्री** महाराज उचित है।

**प्रतिहारी** महाराज! पंडितप्रवर जगन्नाथ आदरपूर्वक लाये जा रहे हैं।

**शाहजहाँ** बहुत अच्छा! इनका सुंदर व्यक्तित्व मेरे मन को बहुत भा रहा है।

**(जगन्नाथ का आगमन, सामन्तों के द्वारा किया गया उद्घोष-'यह जगन्नाथ हैं यह पंडित श्रेष्ठ हैं, ये वही विद्वान् हैं जिन्हें महाराज ने उदयपुर से बुलाया है।)**

**जगन्नाथ** दिल्ली के प्यारे शासक की जय हो! जय हो!

**शाहजहाँ** पंडितश्रेष्ठ आएँ आपका स्वागत है, इधर आएँ!

**मंत्री** पंडितवर! महाराज ने अपने सिंहासन के निकट ही आपके लिए आसन की व्यवस्था करवाई है।

**शाहजहाँ** तो इसमें आश्चर्य की क्या बात है? मंत्रिवर, कवि और विद्वान् कभी भी राजा से कम नहीं होता है। राजा तो केवल

अपने ही देश में सम्मान पाता है किन्तु विद्वान् तो सभी जगह सम्मान पाने का अधिकारी होता है। राजा तो अपने दंड-बल के अधिकार से केवल शरीरों पर ही शासन करता है। किंतु कवि तो अपनी वाणी के बल से हृदयों पर शासन करता है। पंडितवर, हम आपका सान्निध्य पाकर अनुगृहीत हो गये हैं। इधर आसन ग्रहण करें।

**जगन्नाथ** मैं अनुगृहीत हुआ। एक बार फिर मुगल राज्य में आकर उसके साहित्य प्रेम का अनुभव कर रहा हूँ।

**शाहजहाँ** पंडितवर, मैं अपने पिता की सभा का स्मरण कर रहा हूँ। जहाँ पर आपके मुख से काव्यरस का अनुभव किया था। अब किसी पद्य को सुनाएँ।

**जगन्नाथ** महाराज सुनें-

**मधु सरोज का पुष्प सुगंधित मन को भावे**
**विष्णु हस्त में हुआ सुसज्जित भाग्य सराहे**
**विष्णु प्रिया का आसन देव हृदय में धारे**
**हंसों से क्यों बैर तू क्यों न सोच विचारे**

**शाहजहाँ** बहुत अच्छे, बहुत अच्छे। मैं और पद भी सुनना चाहता हूँ।

**जगन्नाथ** महाराज सुनें-

**स्वच्छ नीर उत्पत्ति अरु मोहक रूप सुगंध**
**ईश हस्त सौभाग्य है काम दीप्त मधु मंद**
**पुष्प कमल है श्रेष्ठ तू मधुप है तुच्छ स्वभाव**
**उससे तेरी प्रीति अति, तव उदात्त मन भाव**

**शाहजहाँ** साधु पंडितवर, वस्तुतः तुम्हारे प्रति हमारे स्नेह, प्रेम की झलक इन दो पदों में दिखायी देती है। हम प्रसन्न हुए। आपको शासन की ओर से 'पंडितराज' की पदवी सादर प्रदान की जाती है। यदि आप को ग्रंथ की आलोचना में काव्य रचना में पांडित्य के संशोधन, सम्वर्धन में किसी भी सहायता की अपेक्षा होगी वह आपको दी जाएगी।

**जगन्नाथ** मैं संस्कृत के ग्रंथो के अध्ययन के साथ साथ अरबी व फारसी के भी अध्ययन की इच्छा रखता हूँ। मेरा विचार है कि मानव भावना को पूरी तरह जानने के लिए विभिन्न भाषाओं के साहित्य का तुलनात्मक अध्ययन करना आवश्यक होता है। मेरे लिए अरबी व फारसी भाषाओं के जानने वाले कुछ विद्वान् नियुक्त कर दीजिए।

**शाहजहाँ** अवश्य आप विभिन्न भाषाओं के जानकारों के तथा विविध धर्मों के मानने वाले लोगों के विचारों को ग्रहण करते हुए अपने विचारों से उन्हें भी अवगत कराते रहें।

**जगन्नाथ** वह तो मैं करूंगा ही। इस समय जाने की अनुमति चाहता हूँ। आप अपनी शासन व्यवस्था को देखें। उसमें मैं किसी भी तरह का विधन नहीं डालना चाहता हूँ।

**शाहजहाँ** जैसा भी आपको उचित लगे।

**जगन्नाथ** कल्याण हो।

०१. 'संस्कृत का विद्वान् अरबी की शिक्षा ग्रहण कर रहा है, यह आश्चर्य की बात है।'

०२. 'क्यों भला महाराज अरबी फारसी के कवियों की अपेक्षा इन जगन्नाथ का अधिक सम्मान करते हैं?'

०३. 'ऐसा सुना जाता है कि वह बहुत ही कुशाग्र बुद्धि के हैं जिससे कि बहुत जल्दी ही वे विदेशी भाषाओं को भी सीख लेते हैं।'

०४. 'उर्दू कविता को भी बड़ी प्रभावपूर्ण शैली में पढ़ता है।'

०५. 'मौलवी लोग भी उनकी बुद्धिमत्ता को अचरज से देखते हैं'

०६. 'निश्चित ही यह पंडित हम सबके उपर स्थान पा लेगा।

०७. 'अरे क्या आपने सुना? आज तो जगन्नाथ पंडित ने शास्त्रार्थ में दूसरी भाषाओं के विद्वानों तथा दूसरे मतों के अनुयायियों को मौन करा दिया तभी तो आज

उन्हें महाराज शाहजहाँ के द्वारा पंडितराज की पदवी से सम्मानित किया गया है।'

०८. 'राज्यसभा में भी वह महाराज शाहजहाँ के साथ ही बैठते हैं।'

०९. 'अरे जगन्नाथ के साथ तो महाराज चतुरंग भी खेल रहे हैं।'

१०. 'राजभवन में वह बिना किसी रोक टोक के जा सकते हैं।'

११. 'वह केवल राजकवि और सभा का पंडित ही नहीं है बल्कि वह तो महाराज का अंतरंग मित्र भी है।'

१२. 'हुच! इस छोकरे को भला अत्यधिक प्रतिष्ठा क्यों दी जा रही है। इसमें कौन सी खासियत दिखाई दे रही है।'

१३. 'आज साम्राज्य में उसके समान कौन है जो चतुर्मुखी व्यक्तित्व का धनी हो?

१४. 'उसकी कविता को सुनकर सब अपना सिर हिलाने लगते हैं।'

१५. 'काव्य की रचना तो वह बहुत ही शीघ्रता से कर लेता है'

१६. 'निश्चित रूप से वह पंडितराज है।'

१७. 'यह कवि अत्यधिक रूपवान है जिसे देखकर ही कन्या इस पर मोहित हो जाती हैं।'

१८. 'सुना जाता है कि लवंगी भी उसे चाहती है।" यदि कोई चतुर व्यक्ति बादशाह के कानों तक यह बात पहुँचा देता है तो निश्चित ही पंडितराज को निष्कासित कर दिया जावेगा।'

१९. 'हाँ, ऐसा ही होगा।'

२०. 'लवंगी तो महाराज के परिवार की कन्या है। सम्राज्ञी तो उसे बहुत स्नेह करती है।'

२१. 'अरे उसकी अनुपस्थिति में इस तरह क्यों गरज बरस रहे हो? उसके सामने तो कुछ भी नहीं कहा जाता। यदि साहस है तो उसके सामने उसकी निंदा करो।'

**ये सभी प्रशंसकों की, निंदकों की तथा तटस्थ जनों की ध्वनियाँ नेपथ्य में सुनाई देती हैं।**

**( ३-लवंगी अपनी सखी के साथ )**

**लवंगी** सखी क्या आज मुझे कोई कविता नहीं सुनाओगी?

**सखी** लवंगी! क्यों नहीं सुनाउंगी? एकदम नयी कविता सुनो-

**मुख चंद्रमा अरु कस्तूरी तिलक**
**मुस्कान सुशोभित चांदनी।**
**संध्या को आओ मुँडेर पर लखे**
**मुख हो पुष्पित कुमोदनी।।**

**लवंगी** अति सुंदर, तुमने बहुत ही प्रभावशाली ढंग से कविता को प्रस्तुत किया है।

**सखी** दूसरी भी सुनोगी?

**लवंगी** यह भी कोई पूछने की बात है। उपकार करने के लिए भी अनुमति मांग रही हो। मेरे कानों को अमृत से भर दो।

**सखी** सुनो-

**कृश काय मन को लुभा रही**
**मुख चंद्र पट में छिपेगा ना।**
**देखो, फीकी लगती है चांदनी**
**मुख है या स्वर्णिम चंद्रमा।।**

**लवंगी** ये कविताएँ किस किस से सीख कर आयी हो?

**सखी** उसी से जो आजकल कहता है-

**मैं भामिनी अनुराग रत कमलनयन मुसकाय।**
**ब्रह्मज्ञान सम रस प्रणय सकल चित्त भरमाय।।**

**लवंगी** मूर्ख, धीरे बोल। ढिढोंरा मत पीट। स्वर धीमा रखो। यदि कोई सुनले तो।

**सखी** क्यों डर रही हो? यह कविता तुम्हारे लिए नहीं लिखी गयी है। व्यर्थ अभिमान करने की आवश्यकता नहीं है। इतनी सुन्दर नहीं हो।

**लवंगी** मैनें कब कहा कि यह कविता मेरे लिए लिखी गयी है।

**सखी** झूठ मत बोलो। अभी तो तुमने कहा था कि स्वर धीमा हो जब यह कविता गाई जावे। सुनो सच तो यही है कि (अचानक जोर से बोलती है) यह कविता आज ही लिखी गई है और (मुस्कराते हुए) लवंगीपर ही लिखी गई है और (खिलखिलाते हुए) लिखी भी पंडितराज ने है। जो आज कल.....

**लवंगी** अरे क्रूर! बेकार की बात मत कर। (ले तेरा मुख हाथ से बन्द करती हूँ) अच्छा चल बात पूरी कर ले। जो आजकल क्या?

**सखी** जो आजकल कहता है –

**श्रवण किया है उपनिषदों का**
**पाठन भगवत गीता का।**
**मन विस्मृत क्यों न कर पाता**
**पल भर भी परिणीता का॥**

**(लवंगी लज्जा और प्रसन्नता के मिश्रित भाव का अभिनय करती है।)**

कहाँ खो गई हो? क्या भूल गई कि आज सम्राज्ञी के सामने तुम्हारे नृत्य की परीक्षा होगी। याद रखना कहीं उसे यादकर पद भंग न हो अन्यथा–

**लवंगी** हर समय परिहास अच्छा नहीं लगता। चलो सम्राज्ञी के पास चलते हैं।

**(४-राजप्रासाद, सम्राज्ञी का विश्राम कक्ष)**

**शाहजहाँ** सम्राज्ञी! आप कुशल तो हैं?

**सम्राज्ञी** यदि आप पूछ रहे हैं तो सब कुशल ही है। अब तो आप बस पंडितराज की कविताओं को ही चाहते है, मेरी आपको कोई परवाह नहीं है। मुझे तो लगता है कि पंडितराज की कविता मेरी सौत बन गयी है।

**शाहजहाँ** (हँस कर) वास्तव में वह लिखते ही हैं इस प्रकार की कविताएँ कि उनका रसपान करके किसी भी सहृदय व्यक्ति को अंगूर की मिठास भी नहीं मोहती। यह पंडितराज बहुत ही मेधावी हैं जो साहित्य में और न्याय के कठिन ग्रंथों में कोमल भावनाओं को समान रूप से पिरो देते हैं। आपको भी उनकी कविताएँ सुनवाऊंगा।

**सम्राज्ञी** मैने उनकी कविताएँ सुनी हैं। बहुत ही सुन्दर हैं।

**शाहजहाँ** कब? किससे?

**सम्राज्ञी** लवंगी ने सुनाई और वह भी कहीं से सुनकर आयी थी। यह श्लोक सुना रही थी–

**कोमलकाया कामिनी मादकमधु मुख दर्श**
**कमल, नाल, अरु पात का रूक्ष लगे स्पर्श**

**शाहजहाँ** अरे लवंगी तो बहुत ही मेधावी है। जो उसने आपके सामने पंडितराज की कविता सुनाई। वह स्वयं भी तो काव्य-रचना करती है। संस्कृत में उसकी रुचि बचपन से ही है। अच्छा क्या उसने कुछ और भी कहा था?

**सम्राज्ञी** कहा तो कुछ नहीं लेकिन बहुत कुछ व्यक्त हो गया।

**शाहजहाँ** क्या?

**सम्राज्ञी** पंडितराज के प्रति उसके मन में अनुराग है। मुझे तो यह भी ज्ञात हुआ है कि उसने पंडितराज से संस्कृत सीखने की प्रार्थना की है। वह तो पंडितराज के लिए पागल हो गई लगती है। जब से पंडितराजरूपी चंद्रमा को उसने देखा है, पगली चकोरी की तरह चंचल नयनों से उन्हे देखने को हो लालायित रहती है। उसकी मनोदशा तो मैंने आपको बता

तत्र 'वाङ्मये सरसं वस्तु गद्यैरेव विनिर्मितम्' इति पद्यात्मिका वाणी गद्यप्रशंसापरा दृश्यते।

लोकयात्रानिर्वाहो यद्यपि गद्येनैव भवति तथापि संस्कृतवाङ्मये गद्यरचना किमिति विरलतरलेति नो विद्मः। कमपि संस्कृतसाहित्येतिहासग्रन्थम् अवलोकयामश्चेद् तत्र यदि पंचशतपृष्ठात्मको भागः पद्यसाहित्यं विवृणोति तत्र गद्यसाहित्यमाश्रित्य प्रायः केवलं पंचाशत्पृष्ठात्मको भागस्सन्निवेशितो दृश्यते। तत्र प्रश्नः समुन्मिषति मनसि 'किं गद्यरचना पद्यरचनापेक्षया क्लेशसाध्या, यथा किल आचार्याः जगन्नाथपाठकमहोदयाः तिलकमंजरीकर्तुः धनपालस्य वचनमुद्धरन्तः वदन्ति 'व्याघ्रादिव समाघ्रातो गद्याद् व्यावर्तते जनः' इति।

मम त्वित्थं भाति यद् रेलमार्गगामिनीव कविताकामिनी च्छन्दोमार्गगामिनी द्रुतं तत्प्रणेतारं यशोराशिभिरासिंचन्ती स्वलक्ष्यस्थलं प्रापयति। किन्तु मध्यदेशे प्रशस्ततरं मार्गमन्वेषमाणा लोकवाहिनीव नैकविघ्नशंकिनी स्वैरं प्रयाति गद्यरचना। काले एव कविः स्वलक्ष्यस्थलमधिगच्छति वा न वा को नु वेद। ... ।

अद्यत्वे यद्यपि नैकविधाः कथाः संस्कृतसाहित्यमलंकुर्वन्ति तथापि तत्र साहसिकयात्राकथानामभावः परिलक्ष्यते। प्राचीने काले तु दण्डकारण्यगमनं, विन्ध्याटवीषु पर्यटनं वा रोमांचकारि आसीत्, तादृशी यात्राकथा साहसिकयात्राकथास्वन्तर्भवति स्म। अद्यत्वे तु प्रतिस्रोतसि गिरिनदीमार्गेण नौयात्रा, हिमाच्छादितमत्युच्चं हिमवच्छिखरं प्रति गमनं, महास्फोटकद्वारा वायुमार्गेण विश्वभ्रमणं साहसिकयात्राकथास्वन्तर्भवन्ति। अथवा अत्युच्चपर्वतकन्दरासु शिखरेषु कारगिल्तुल्यसैन्यावासेषु युद्धकाले आपद्ग्रस्तरक्षिबलसहायार्थं वा गमनं रोमांचकरं साहसिककथानकं स्यात्। नाहं जाने तादृश्यः कथाः संस्कृते विरच्यन्ते न वा।

अद्यत्वे तु इतरासु भाषासु केचन दुर्वृत्तपराणामुन्मार्गगामिनां दुर्धर्षकारिणां रोमहर्षपराणि चेतोदुर्मर्शकारिणि वृत्तजातान्यवलम्ब्य कथाः विरचयन्ति, यत्पठनमात्रेण जनः दुःखपंकनिमग्नो भवति। चेतांसि तु उद्वेलितानि भवन्ति। अपि काव्यस्येदं स्वरूपं तन्मार्गदर्शकानां महर्षिणामभिप्रेतमिति प्रश्नोऽपि विचारणीय एव। तत्र काव्यस्वरूपं शिवेतरक्षतये सद्यःपरनिर्वृतये भवति ननु

काऽत्र परनिर्वतिः

इतरभाषानुसरणपरायणाः केचन संस्कृतभाषायामपि तथाविधाः कथाः विरचयन्ति याः मन उद्वेजनकारिण्यः भवन्ति। भाषासाहित्यदृष्ट्या अयं नवोपक्रमः अभिनन्दनीयः स्यादपि, किन्तु तत्र कविमर्यादायाः लोकमर्यादायाश्च उल्लंघनं यथा न स्यात् तथा दृष्टिर्देया।

केचन विमर्शकास्तु इदं पृच्छन्तः सन्ति यत् अद्यापि संस्कृतसाहित्यं किमिति भारतीयज्ञानपीठपुरस्कारेण न सभाजितम् नोवेल्साहित्यपुरस्कृतिकथा तु दुरापेता। अपि "नैव स्थाणोरपराधः यदेनमन्धो न पश्यति"इति यास्कीयामुक्तिम् अनुसृत्य आत्मतृप्तिमनुभवामो वयम् उत "स्थाणुरयं भारहारः किलाभूत्" इति पातंजलं वचनमनुस्मृत्य आत्मसमीक्षणं कार्यमस्माभिरित्यपि विचारणीयम्!

तदत्र केचन अन्येऽपि प्रश्नाः समुन्मिषन्ति मनसि, तानपि भवतां पुरस्तात् उपस्थापयितुमनुज्ञां याचे। ते सन्ति अपि अस्त्यद्य कश्चिद् अभिनवविष्णुशर्मा यदीया रचना सार्वकालिकी कालातिबाह्या च स्यात् अपि अस्ति कश्चित् काचिद् वा हरिकुम्भकार इव चरित्रनिर्माता संस्कृते येन चरित्रेण विश्वमनः सम्मोहितं स्यात्, स्याच्च आबालेभ्यः आ च देवर्षितुल्यविद्वत्तल्लजेभ्यः तन्मनोविनोदाधायकम् अपि शक्यमस्माभिः याथातथ्येन निर्णेतुम् इव "संस्कृतरचनाधर्मिणः" इति मानं प्रतिष्ठापयितुम्।एवं सन्ति नैके प्रश्नाः यदर्थमियम् अभिरूपभूयिष्ठा परिषद् अलं विवेचयितुं मार्गमादेष्टुं च। ७-८.९.२००३ दिनांकयोः सागरविश्वविद्यालयस्य संस्कृतविभागे आधुनिकसंस्कृतगद्यसाहित्यमिति शोधसंगोष्ठ्यामाचार्याच्युतानन्ददाशमहोदयेन प्रदत्तं प्रास्ताविकभाषणम्। सागरिकायाः आधुनिकसंस्कृतगद्यकाव्ये स्वर्णकाल-विशेषांक इति ३७.३४. इति अंकात् कृतज्ञतापूर्वकं गृहीतम्।

कथासरितः परामर्शदातृसदस्येषु प्रमुखो वर्तते अभिराजराजेन्द्रमिश्रवर्यः। पंचमतरंगे स कथासरिद्वाचकैः साक्षात्कृतः। षष्ठे स आसीन्मम तातपादः, सप्तमे प्रीतिदर्पणः, अष्टमे छिन्नमस्ता, नवमे वाडवाग्निः, द्वादशे मातुर्निमित्तम्, नवदशे स्वयंवृत्ता इति षड् कथास्तस्य कथासरिति प्रकाशिताः।एतासु काश्चन छिन्नमस्ता इति तस्य कथासंग्रहे परवर्तिनि काले प्रकाशिताः अभवन्। घटनाया

भवतु, भवतु वा दुर्घटनायाः, विषयवर्णने कथाकारस्यास्य लेखनी महीयते। यथा स्वयंवृताकथायां प्राकृतिकविपर्ययस्य वर्णनं वर्तते आपणिकमुखेन

श्रीमन्! योऽयं समक्षवर्ती मृत्तिकापर्वतः सेतुं निकषा दृश्यते तत्र विलसति स्म किंचित्पंचभूमिकं त्रितारकमतिथिगृहम्। केनचित् पंचनदवास्तव्येन कोटिपतिना तन्निर्मापितमासीत्। परन्तु नेदानीं परिलक्ष्यते। दैवयोगान्नामशेषतामुपगतम्। द्विवर्षपूर्वं निरन्तरधारासारवृष्टिप्रहारमसहमानेन धराशायिना मृत्तिकाभूधरेण कालनिशायां तदतिथिभवनं तथा कवलितं यथा तस्य चीत्कारोऽपि न केनापि श्रुतः। कियन्तो जना .... तस्यां रात्रावासन्, कियन्तो मृताः, कियन्तो नद्याः प्रवाहे विलीनाः, कियन्तोऽगंभंगाः संजाताः इति न कोऽपि वेत्तुं शशाक।

श्रीमन्! युगान्तरात्रिरासीदसौ। सम्प्रत्यपि स्मरणमात्रेण रोमकम्पो जायते। वयमपि सर्वे कुटुम्बिनः स्वभवनापणयोगक्षेमार्थं भगवन्तं प्रार्थयमाना नेत्रेष्वेव क्षपां क्षपितवन्तः। यदेयं दुर्घटना संजाता न किमपि साहाय्यं शक्यमासीत्। अतएव सर्वमपि परमस्वच्छन्दतया घटितम्। प्रभाते सति शासनाधिकारिणः समागताः। क्रेनयन्त्रेण ध्वंसावशेषापसारणकार्यं समारब्धम्। मृतकानां 'पङ्क्तरास्तीर्णाः। अवशिष्टश्वासप्रश्वासाः क्षतविक्षता द्रुतगत्या पौडीश्रीनगरकोटद्वारहरिद्वारादिचिकित्साकेन्द्रेषु प्रापिताः।(कथासरित् १९ पृ.१७)'

**राधावल्लभत्रिपाठी**

आधुनिककथाकारेषु विशिष्टं स्थानं वर्तते त्रिपाठिवर्यस्य। प्रथमे तरंगे एव तस्य कथा पथिकानुभूतिः प्रकाशिता आसीत्। तस्य अभिनवशुकसारिकायाः द्वितीयभागः पूर्णतया कथासरिति एव प्रकाशिता धारावाहिनीरूपेण। **अन्यच्च** त्रिपाठिविरचितः सद्यःप्रकाशितेषु श्रेष्ठतमः संस्कृतोपन्यासो यत्र औपन्यासिकः स्वबुद्धिवैशारद्येन सन्निवेशयति कनिष्ककालिकं महाभारतीयं चित्रम्। अत्र त्रयः खण्डाः सन्ति, तत्र पुनः क्रमशः ४० भागाः सन्ति, ६५ सन्दर्भाश्च विलसन्ति, विशेषव्याख्यानसहिताः। कल्पितकथानायकस्य विशाखस्य प्रथमाश्रमस्य कथा वर्णितास्ति, प्रसंगतः तस्य पितृगृहस्य, गुरुकुलस्य बाल्यकालस्य च कथा निरूपिता। विशाखस्य बाल्यकालस्य विविधक्रीडाः वर्णिताः अत्र। मात्राचरितानि व्रतानि वर्णितानि।

पुराणलेखनव्याजेन लेखनीनिर्माणग्रन्थनिर्माणसंशोधनविधानानि वर्णितानि। मार्गे आगताः संगमप्रतिष्ठानपुरविदिशादशार्णदेशमथुराः वर्णिताः, क्रमप्राप्ताः वैदेशिकाः, बौद्धभिक्षवश्चापि वर्णिताः, पुरुरवोर्वश्युपाख्यानस्य, मेघदूतस्य च वर्णनं जातम्। तक्षशिलां प्राप्य पाठं समाप्य मिलिन्दप्रश्न इति पुस्तकमाचार्येभ्यः वसुमित्रेभ्यः समर्पणीयमिति गुरुदक्षिणा घोषिता। द्वितीये खण्डे भागेषु विशाखस्य तक्षशिलातः काश्मीरयात्रा विशदीकृता। वितस्तायाः तीरे तस्य गमनं प्रचलति। तृतीयखण्डे विशाखस्य इरावत्या सह विवाहस्य, किन्नरपुरस्य, इदानीन्तनशासकानां दुराचारस्य च कथा वर्णिता। महास्थविरेण वसुमित्रेण मिलित्वा तस्मै मलिन्दपन्हं ग्रन्थमुपायनीकरोति। अश्वघोषस्य विषयेऽपि शृणोति। सामनरेण शिल्हणेन गत्वा स प्रवरपुरे अश्वघोषेण मिलति। तस्य मित्रं विपाकएवासीत् सः। शिबिकया तं नवकिन्नरपुरं शीघ्रं प्रेषितवान् अश्वघोषः। अन्तिमे विशाखः किन्नरपुरस्य शासनदायित्वे नियुक्तः। एवम् उपन्यासोऽयमवसितः।

**ताण्डवमिति** राधावल्लभत्रिपाठिना विरचिते उपन्यासे काश्मीरनरेशस्य हर्षस्य जीवनचरितं वर्णितं वर्तते। काश्मीरे १०८९-११०१ पर्यन्तं द्वादशवर्षाण्यसौ हर्षः शशास। फ्लैश बैक तन्त्रमाश्रित्य कथाकारः समग्रां कथां श्मशानभूमौ हर्षस्य पूर्वकथाचिन्तनरूपेण निरूपयति, यत् ताण्डवस्यानुभावत्वेन स्वीकर्तुं शक्यते। एवं प्रतीयते हर्षस्य जीवनं मानवीयभावानां क्रोधद्रोहेर्ष्यासूयादुःख-शान्त्यादीनाम् उद्धतनृत्यमात्रमासीत्। माता भुवनमती तं श्मशाने प्रसूय भैरवमन्दिरे आश्रिता, सोऽपि अन्तिमजीवनं श्मशाने अतिवाह्य भैरवमन्दिरे कापालिकरूपेण प्रच्छन्नः स्थितः। तत्र कारणमासीत् काश्मीरस्य तात्कालिकी राजनीतिकी स्थितिः, गृहकलहः, परस्परं द्वन्द्वश्च। ततःएव कथा प्रारभते।

तेषु दिनेषु रात्रियापनाय अपि हर्षः कथम् आहिण्डते स्म इति ग्रन्थे सर्वत्र वर्णितम्। द्वितीयतृतीयभागयोः तत् विस्तृतम्। अनुचराभ्यां मुक्तप्रयागाभ्यां हर्षः इतस्ततः आत्मगोपनं करोति स्म। ... ... हिंसा तस्य मनसि ताण्डवमकरोत्, तत्ताण्डवं विरतम्। जगतः संहारं करोमीति कदाचिदसौ कलयामास, इदानीं जीवनलीलां संहरामीति विचिन्तयति। ... ... बाल्यादेव हर्षो मदीये मनसि घोरश्च अघोरश्च शिवो वसतीति प्रत्येति स्म। कदा घोरो रुद्रः जागृयादिति स न जानाति, कदा प्रशान्तसदाशिवः पदं निदध्यादित्यपि न वेत्ति। सम्प्रति स

प्रशान्तः। यद्वा भवतु तद्वा भवतु। जीवेयं वा म्रिये वा। इदानीं तस्य मनसि परमहंस आविर्भूतः। ... ... शरीरं भस्मना वृतम्। यच्छरीरं विविधा मुक्तामालाः अलंकुर्वन्ति स्म, तत्पांसवः रेणवः धूलिकणाश्च लिम्पन्ति। ... ... इदानीं विराम एव। अपि नाम आकाशस्य छदिं पर्वतस्य पर्यंकं विरच्य स्वपिमि वा समग्रा धरणी तस्य वर्तते। इति कथयन्नसौ जहास। ... ... प्रयागस्य नेत्रयोः पुनरपि अश्रूणि डबडबायितानि। आजीवनमयं महात्मा मुग्धः अनवबोधः इति ज्ञातः। केचन एनं साक्षात्शिवं मत्वा अपूजयन्, तदानीं मया नावबुद्धोऽस्य महिमा। ... पृ.४३४४

**अनुभववीथिः** आचार्याणां राधावल्लभत्रिपाठिनां सद्यः प्रकाशितासु सारस्वतकृतिषु लघुकाया कृतिः वर्तते अनुभववीथिः। अत्र यस्मिन् कस्मिन् प्रसंगे आचार्याणां मनोभूमौ तरंगिता ऊहापोहाविजडिता अनुभवा अक्षरब्रह्मणा परिवर्तमानाः सुरसरस्वत्याः अक्षयभाण्डागारस्य अक्षयनिधित्वेन विपरिणमन्ते। अत्र लेखकेन जीवनस्य अष्टावेव वीथयः पर्यटिताः। कथासरितः प्रथमतरंगे लेखकस्य एका ललितकथा पथिकानुभूतिः नाम्ना प्रकाशिता आसीत्। सैव अत्र प्रथमायां वीथ्यां स्थानिता, सामान्यपरिवर्तनेन सह। ततः सामान्यांशः द्वितीयकथायामपि अनुवर्तते।

एतासु कथासु प्रथमा दीर्घतमा १० पुटमिता, अन्याः द्वित्रपुटात्मिकाः वा सन्ति। सर्वत्र लेखकस्य शब्दचातुर्यं, शास्त्रनैपुण्यं, विमर्शनकौशलं, भाषाधिकारश्च प्रेक्षणीया एव। कानिचिदुदाहरणानि यथा

प्रथमं तु पंचकर्मेन्द्रियैः पंचज्ञानेन्द्रियैः मनोबुद्ध्यहंकारचित्तैश्च संहितो मम कायः यत्र विश्राम्येत् तादृशं स्थानमन्वेष्टव्यम्। तथापि त्वरा नास्ति। पृ.५।

प्रतीक्षालयद्वारि लम्बोदरी चिबुकद्वयवेष्टितकण्ठी कर्कशकण्ठी प्रतीहारी उपविष्टा विष्टरे। पृ.५

मांसाहारिषु गान्धिवादिष्वपि सन्ति त्रिविधाः श्रेणयः, केचन केवलं कुक्कुटमांसे एव दत्तरुचयः, केचन गोमांसवर्जं सर्वं खादन्ति, अपरे गोमांसमपि खादन्त्येव। पृ.९

त्रिकालं सन्ध्यां न करोमि, तथापि हिन्दुरस्मि। देवालये न यामि तथाप्यस्मि हिन्दुरेव। पृ.१०

हिन्दुस्थानम् इति नाम तु आंग्लैः शतं समाभ्यः प्राक् द्विशतं समाभ्यः प्राग् वा दत्तं स्यात्। देशः पुल्लिंगः, स हिन्दुस्थानं कथं भवितुमर्हति। अहं तु जाने अस्य देशस्य भारतवर्ष इति संज्ञा। पृ.११

ललितकथासु दत्तरुचयः पाठकाः संस्कृते उत्तमाः कथाः न प्राप्नुवन्ति। भट्टमथुरानाथस्य कलानाथशास्त्रिणः प्रभुनाथद्विवेदिनः कोट्यां त्रिपाठिनो राधावल्लभस्य इयमपरा मात्रा योजिता इति पुनः वक्तव्यं नास्ति।

**हर्षदेवमाधवः**

एष खलु कथासरितः नियमितलेखकेष्वन्यतमो वर्तते। हर्षदेवमाधववर्यस्य मूको रामगिरिर्भूत्वा इति उपन्यासः प्रथमतः कथासरिति यक्षस्य वासरिका इति शीर्षकेण तृतीयतरंगात् षष्ठतरंगं यावत् प्रकाशितः। एषा न खलु कथासरितः प्रथमा धारावाहिनी आसीत् अपितु हर्षदेवस्य प्रथमा गद्यकृतिरासीत्। परन्तु कथासरितः माध्यमेन तस्याःएवं प्रचारः अभवत्, येन धारावाहिनीरूपेण प्रकाशनसमाप्तेः पूर्वमेव केन्द्रसर्वकारस्य सर्वोच्चसंस्कृतग्रन्थप्रकाशनसंस्थया राष्ट्रियसंस्कृतसंस्थानेन पुस्तकाकारेण प्रकाशिता। हन्त, प्रथमां धारावाहिनीमग्रे वयमनुवर्तयितुं न शक्तवन्तः।

नित्यनूतनकाव्यविधाप्रणयनपरायणस्य हर्षदेवमाधवस्य नूतनः कश्चित्संरम्भो **मूको रामगिरिर्भूत्वा** इत्युपन्यासः। शीर्षकनाम्ना एव अनुमीयते अत्र रामगिरिणा सह तन्मूलेन मेघदूतेन सह वा कश्चन सम्बन्धो वर्तते इति। अयं विश्वासार्ह एव विषयो नास्ति यत् मेघदूताद्वस्तु संगृह्य कश्चित् विनूतनशैल्या अभिशप्तयक्षस्य आत्मकथनशैल्या वासरिकारूपेण उपन्यासं विलिखेत्! स नूनं सर्वेषां निष्क्रातेः परं संक्रान्तेः वा परं वाग्देव्याश्चमत्काररूपो हर्षदेव एव स्यात्, यः खलु मेघदूतीयान् शतं श्लोकान् विस्तारयति शतं पृष्ठेषु, ३६५ दिवसेषु! वस्तुतः अत्र १५६ दिनानामेव दैनन्दिनी वर्तते। अत्र यदि ३६५ दिवसानामेव दैनन्दिनी भवेत्! अविहा! उपन्यासोऽयमुपन्यस्तः प्रथमतो यक्षस्य वासरिकारूपेण कथासरित्पत्रिकायां, ततः मंजुलताशर्मणः हिन्द्यनुवादेन सह राष्ट्रियसंस्कृतसंस्थानात्। प्रतिपृष्ठमत्र मूकेऽपि रामगिरौ विलसति प्रत्यणु गिरित्वं नाम मूल्यबोधत्वादिविशेषत्वं, यदन्वेति भारततत्त्वे भारतीयसंस्कृतौ च। हर्षदेवो यथा कविरेव शृणुयात् मूकप्राणस्य मौनदहनम्। मूकवचनमपि

तस्य महावाक्यायते।

अनवरतयज्ञधूमाच्छादिते नभसि वेदमन्त्रघोषैर्गुंजत्यन्तरिक्षे धर्मश्रवणमग्नेषु ग्रामेषु इष्टापूर्तकर्मव्यापृतेषु सचिवेषु, धर्मशास्त्रनिर्दिष्टशिष्टाचारयुक्तासु प्रजासु विनापि दण्डेन नियन्त्रिते राज्ये मया शिवभक्तिपरायणं जीवितं यापितम्। माघशुक्लसप्तमी।

उपन्यासोऽयं भारतीयपरम्पराणां व्रतोपवासपूजापर्वणां, पशुपक्षिवृक्षलतानां, मासानामृतूनामन्ततोगत्वा निसर्गलक्ष्म्याः काव्यमयविन्यासं करोति। अत्र १५६ दिवसानां दैनन्दिनीमध्ये शताधिकवन्यपशुपक्षिणां निरूपणं कृत्वा तैः सह स्वप्रियासारूप्यं सम्भावयति, शताधिकभारतीयपर्वणां समुज्ज्वलवर्णनं विदधाति, नित्यनूतनरूपेण विस्तारयति कथाकारः यक्षरूपेण। कदाचित् तत्र आदर्शरूपेण कविः शब्दकोशं पंचांगं च स्वीकृतवान् स्यात्! विद्याविद्यास्थानशास्त्रागममन्त्रतन्त्ररागसंगीतसाधनाभिः यक्षः क्षणमिव वर्ष, परिशेषे जीवनं यापयितुं सिद्धिप्राप्तये च प्रस्तुतो भवति।

**बनमालिविश्वालः**

आधुनिकसंस्कृतसाहित्यरचनाप्रसंगे को वा न जानाति बनमालिनः बिश्वालस्य नाम। स खलु राराजते आधुनिकसंस्कृतकविषु, कथाकारेषु पत्रिकासम्पादकेषु च। तेन नैकाः काव्यकृतयः विरचिताः संगमेनाभिरामा, व्यथा, ऋतुपर्णा, प्रियतमा, वेलेन्टाइन्डेसन्देशः इत्यादयः। तस्य कथासंग्रहत्रयं प्रकाशितमस्ति। साहित्यं समाजस्य दर्पणः भवति। साहित्यमाध्यमेन वयं समाजस्य परिदृश्यं द्रष्टुं शक्नुमः। बनमालीबिश्वालेन स्वकीयासु कथासु नैकाः सामाजिक्यः समस्याः उद्भाविताः।

**नीरवस्वनः** अत्र त्रिंशत् कथाः सन्ति। निरुद्दिष्टहृदयम् नामिकायां कथायां कथाकारस्य अन्तरंगस्य आशयः भंग्यन्तरेण प्रकाशितः अस्ति। तस्यां कथायां सः लिखति कथां लेखितुम् अहं न जानामि, तथापि कथालेखने मे अदम्या प्रवृत्तिः। लिखामि इति तु सत्यं किन्तु लेखनं कुतः आरभ्य कुत्र समापनीयम् इति स्वयम् अपि न जानामि। न जाने एतत् सत्यम् उत मिथ्या मम एका धारणा वर्तते यत् कवितापेक्षया कथां लिखित्वा लेखकः त्वरितमेव प्रतिष्ठितो भवति लेखकसमाजे इति। कथायाम् कथाकारस्य कौशलात् एव ते

आदिमध्यान्त्यादयः सहृदयहृदयम् आह्लादयन्ति।एतया दृष्ट्या यदि पश्यामः तर्हि नीरवस्वने कासुचित् कथासु आदिमध्यातिसामान्या इव भासन्ते। यत्र उत्तमम् अन्त्यं कल्पयितुं शक्यं तत्रापि क्वचित् कथाकारः ध्वन्यात्मकभावं स्वशब्दैः बिवृण्वन् पेलवताया अवकाशं कल्पयति।एवं स्थिते अपि उत्तमकथाभिः नीरवस्वनः वाचकान् रंजयति इत्यत्र नास्ति सन्देहः।

**बुभुक्षा** अस्य द्वितीये कथासंग्रहे बुभुक्षा इत्यत्र कथाकारेण मुख्यरूपेण सामाजिक्यः समस्याःएव उद्भाविताः।एतस्मिन्नपि संग्रहे समस्याः आधारीकृत्य लिखिताः कथाः अधोलिखिताः वर्तन्ते अपूर्वं पारिश्रमिकम्, दुश्चरित्रा; विश्वासघातोऽपि सुखाय, बलिदानम्, अध्यापकस्य करुणकथा; बुभुक्षा इत्यादयः। संग्रहस्य प्रथमा कथा अपूर्वं पारिश्रमिकम् आधुनिकतमसमाजस्य भ्रष्टं स्वरूपं प्रदर्शयति। दुश्चरित्रा कथा अस्मान्एवं सूचयति यत् अद्यतनीये युगे वर्तमानानां जनानां दृष्टिः दूषिता वर्तते। नारीषु तादृशी दुश्चरित्रता नास्ति यथा कामिनः पुरुषाः चिन्तयन्ति। अस्मिन् युगे यदि कश्चित् उपार्जनाक्षमः निर्धनश्च अस्ति तर्हि सः न केवलं सामाजिकसम्मानात् किन्तु पित्रोः स्नेहादपि वंचितो भवति। बुभुक्षाकथायाः आधारस्तु बुभुक्षितः किं न करोति पापम् इत्येतादृशी भावना वर्तते। अस्माकं समाजे भिक्षायाचनं निन्दनीयवृत्तिरूपेण स्वीकृतं वर्तते।एकः भिक्षुकः यदि अपरस्य भिक्षां चोरयति तर्हि ततः अधिकं निन्द्यं कर्म भवितुमपि न शक्नोति। बुभुक्षाएव कदाचित् तादृशीं निन्द्यां वृत्तिं सम्पादयितुं शक्नोति इति कथाकारः अनेन कथामाध्यमेन प्रस्तौति।

**जिजीविषा** सुप्रसिद्धकथाकारस्य डा.बनमालिनो बिश्वालस्य चतुर्थकथासंग्रहस्य जिजीविषा इत्यस्य प्रकाशनं संस्कृतकथाजगतः समृद्धेः आधायकमस्ति। अस्मिन् संग्रहे संकलिताः पंचविंशतिः कथाः लेखकीयसंवेदनानां विस्तृतक्षितिजस्य तथा तद्विचाराणां गभीरचिन्तनस्य परिचायिकाः सन्ति। आसां कथानां माध्यमेन परिवर्तनशीलव्यक्तिसमाजयोः सरलान् जटिलांश्च जायमानान् सम्बन्धान् आत्मसात्कृत्य विविधकथाभूमौ तेषामभिव्यक्तये सफलप्रयत्नः कृतोऽस्ति।

आसु कथासु संश्लिष्टसंबन्धानामवबोधनस्य प्रयत्नोऽस्ति। नैकाः कथाः दृष्टाः, श्रुताः, ज्ञाताः, मान्याः, विचार्याः भोग्याश्च सत्यः पाठकान्

प्रभावितान् कुर्वन्ति। यतोहि तेषां शिल्पं चिन्तनं च स्तरानुगुणमस्ति। नैकासु कथासु अभिव्यक्तयः पारिवारिकसामाजिकविसंगतयः विरूपताश्च पाठकान् चिरकालं यावद् विचाराय विवशीकुर्वन्ति। अत्र लेखकस्य सूक्ष्मसंग्राहकसंवेदनशीलदृष्टेः परिचयः प्राप्यते। अधिसंख्याकाः कथाः अनास्थायाः, निराशायाः, दायित्वहीनतायाश्च भावबोधं दर्शयन्ति। यथा जिजीविषा, मानवाद् दानवं प्रति स्वाभिमानमित्यादयः। वर्ण्यविषयानुसारं विरचितासु बहुवर्णीयासु आसु कथासु समाजस्य विभिन्नवर्गेभ्यः गृहीतेषु नैकेषु पात्रेषु लेखकस्य लेखन्या दुर्बलसंघर्षशीलविक्षुब्धशोषितपीडितपात्राणां दुःखानि अभिव्यज्य तान् प्रति स्वसहृदयसंवेद्यां सहानुभूतिं करुणां च प्रादर्शयत्। यथा जिजीविषा, निःसंगजीवनं, काव्यं कथात्वमागतम् इत्यादयः।

आसु कथासु चित्रितानां कथापात्राणां मनोवैज्ञानिकं व्यावहारिकं च सूक्ष्मं सहजं वर्णनमस्माकं व्यक्तिगतसामाजिकसंवेदनानां विस्तारे सहायकं भवति। यथा उपाचार्यः, अहो पदलालसा चेत्यादिषु कथासु शिक्षकानाम् अविवेकिताजन्यमहत्त्वाकांक्षात्मकदुर्बलतानां प्रकाशनं कुर्वन्ति पात्राणि सन्ति। जिजीविषा, पापगर्भः, नीलाचलः, भिन्ना पृथिवी इत्यादिषु कथासु परिवर्तनशीलमनोवृत्तीनां प्रवृत्त्यात्मकधारासु प्रवहमानानां पात्राणां सामाजिकः वैयक्तिकश्च संघर्षः निरूपितोऽस्ति। सत्यानन्दस्य विषादयोगः इत्यस्यां कथायां मध्यवर्गीयस्य स्वप्नमयकल्पनालोके विचरतः नवयुवकस्य अभिमानजनितभावनानां भग्नताकुलताव्यथानां च वर्णनं वर्तते। डा. बिश्वालस्य कथासाहित्यं केवलं दर्पणवत् निर्जीवं निष्क्रियं च प्रतिबिम्बतं नास्ति अपितुएतत् समाजस्य यथार्थाः, सजीवाः, कलात्मिकाः, अनेकरूपात्मिकाश्च प्रतिच्छायाः प्रस्तौति। अत्रत्याः कथाः कथाकारस्य कलात्मिकाभिव्यक्तेः प्रशंसनीयं निदर्शनं वर्तते। लेखकोऽत्र विचाराणां तीव्रप्रवाहं विशिष्टलये संयोजयितुं प्रयत्नं कृतवान्। अत्र स्वतःएव निःसृता भाषा वर्तते। वर्तमानसंस्कृतसाहित्यस्य भावगतानां, भाषागतानां सर्वेषां वैशिष्ट्यानामत्र सम्यग्दर्शनं भवति।

**भागीरथिनन्दः**

अर्वाचीनसंस्कृतविद्वत्सु प्रथितयशाः कविः कथाकारः गवेषकश्च श्रीनन्दः यथा मौलकसाहित्यसर्जने पटुः, तथैव अनूदितसाहित्यनिर्माणे पटुः।

विशिष्य मातृभाषायाः उत्तमोत्तमकृतीनामनुवादे गृहीतव्रतोऽयं पण्डितराजस्य काव्यभेदानिव उत्तमोत्तमानूदितकाव्यभेदान् निरूप्य २०१२ वर्षीयं केन्द्रसाहित्याकादम्याः अनुवादप्रशस्तिं प्राप्य विरतः। अस्य अनूदितग्रन्थेषु प्रसिद्धाः सन्ति प्रतिभारायस्य याज्ञसेनी, उल्लंघनं, सीताकान्तमहापात्रस्य भारतवर्षं, चन्द्रभानुशतपथिनः सृष्टितत्त्वानुचिन्तनम् इत्यादि।

**याज्ञसेनीति** डा.प्रतिभारायमहोदयया मूलत उत्कलभाषानिबद्धो ज्ञानपीठमूर्त्तिदेवीत्यादिपुरस्कारभाक् दशाधिकभारतीयभाषास्वनूदितपूर्वः सम्प्रति संस्कृतभाषयानूदित उपन्यासः। आत्मजीवनीशैल्याः प्रयोगेण मूललेखिका अत्र आविष्करोति द्रौपद्या जीवितसर्वस्वम्। जीवनस्य शेषक्षणे स्वजीवनस्य क्षतिं प्राप्तिं च आकलय्य द्रौपदी समग्रमुपन्यासं पत्ररूपेण प्रस्तौति जीवनबान्धवं जगद्बन्धुं भगवन्तं श्रीकृष्णं प्रति। भक्तभगवतोः द्रौपदीश्रीकृष्णयोर्वा अपार्थिवप्रेम्णो वाङ्मयीमूर्त्तिः वर्तते याज्ञसेनी। इदानीं यावदनूदितेषूपन्यासेषु याज्ञसेनी वृहत्तमा श्रेष्ठतमापि वर्तते। समर्थोऽयमनुसर्जकः प्रतिपदं पारम्परिकमानकशैल्या अनुसृजति पुनः प्रत्यग्रतया। पुना रमते मनस्तस्य मूललेखिकायाः भावविश्वे। तेन समपदानुवादेन सह प्रत्यक्षीक्रियते क्वचिदुदात्तभावाः क्वचिद्वा संस्कृतीकरणेन क्लिष्टभावबन्धाः । यदुक्तं प्रसिद्धसमीक्षकेण प्रो.राधावल्लभत्रिपाठिना अनुवादकस्य भाषा अतितरां प्रौढा, मूलकृतेरनुव्यवसायाय गहनभावाभिव्यजनाय च सर्वथा श्लिष्यति। रचनाकारस्य भावजगति गम्भीरमवगाहनं कृत्वा यत्नतस्तद्व्यक्तियोगिनां शब्दानां प्रत्यभिज्ञां विधाय अनुवादः प्रस्तुतः। तथापि मूलभावानां पुरस्करणे पुरश्चरणे वा संस्कृतभाषामर्यादा कुत्रापि बाधिका न प्रतीयते। यथा

आकाशस्य यथादिर्नास्ति, अन्तोऽपि नास्ति, समुद्रस्य यथा न वृद्धिर्न क्षयः, सूर्यस्य यथा नोदयो न चास्तमयः, मनःकामनाया यथा न पूर्णता, न च शून्यता, तथैवावयोः सम्बन्धस्य नास्ति संज्ञा न चोपसंहारः । पृ.१

निर्बोधशिशवे क्रीडनकं प्रदाय परस्मिन् क्षणे तस्माद् बलादाकृष्य हरणस्यैव सर्वं दत्वा सर्वापहरणस्य कथमिदं प्रहसनम् यो हस्तौ प्रसार्य याचते, तं प्रतारयितुमुचितम्। परन्तु यः किमपि न याचते, तस्मै प्रतारणमिदं नैष्ठुर्यातिरिक्तं किमन्यत् स्यात्। पृ.२

क्वचित् मूलभाषायाः मूलपदानि विसृज्य संस्कृतरूढपदानि प्रगुणीकुर्वन्ति कष्टकल्पनाः

धनुःविद्यायामर्जुनः पारदृश्वा। पृ.७ मां कोपयन्त्यस्ताः पर्याकुलीकरिष्यन्ति मे प्राणान्। पृ.१२ नितम्बिनी ममांसे पाणिं न्यधात्।पृ.२७

**नारायणदाशः** संस्कृतसाहित्ये श्रीदाशस्य ८ मौलिककृतिषु ३ काव्यानि क. त्रिरंगपताकातले, ख. कार्गिल्लहरी ग. प्रेतदूतम् इति, ४ कथासंग्रहाः क. गंगे च यमुने चैव.., ख. हत्याकारी कः, ग. लज्जा, घ. नरेन्द्रपुरीयं रेलनिस्थानम् इति, १ उपन्यासः वह्निवलयः इति, च सन्ति। ७ अनूदितग्रन्थेषु २ काव्ये क. वाजिराउतम्, ख. वेदुइनगीतम् इति, ५ कथासंग्रहाः क. सृष्टिः, ख. वात्यासारः, ग. सप्तपदी, घ. कवीन्द्रकथाकल्लोलिनी, ङ. सप्ताहेर सात दिन इति च सन्ति। सम्पादितग्रन्थाः सन्ति षोडशाः क. मनसो नैमिषारण्ये, ख. करुणा, ग. स्वर्गादपि गरीयसी, घ. शबरी, ङ. पथिकानुभूतिः, च. सौन्दर्यलहरी, छ. भाति ते भारतम्, ज. अस्ताचलस्य चन्द्रिका, झ. रेखाचित्रम्, स्वर्गपुरे, ट. नारदस्य व्यथा, ठ. अच्युतानन्दकथासाहित्यम्, ड. देहि मे शरणम्, ढ. तथास्तु, ण. हे मदीयदूरबन्धो, त. सुकान्तकथाविंशतिका इति।

**कथासरितो युवलेखकाः**

प्रतियुगं प्रतिसमाजमाविर्भवन्ति नवनवोन्मेषशालिप्रतिभासम्पन्ना नवयुगसर्जका युवानः साहित्ये नवक्षितिजं निर्मातुम्। तत्र वयं पुरातनपरम्परया सह आधुनिकसमीक्षकखुरक्षुण्णमार्गमपि आविष्कुर्मः। तेषां निर्माणे संस्कृते परम्परितं सनातनं ज्ञानं यथा सहायकं भवति तथैव सहभाग् वर्तते किंचित्पूर्ववर्तिनां तेषामाचार्याणां मार्गदर्शनं, नित्यनूतनसमकालिकसाहित्यपठने सर्जने च तेषाम् अदम्या अभीप्सा। समकालिकमर्वाचीनमितरसाहित्यमपठित्वा कोऽपि युवा स्वच्छन्दं लेखितुं शक्नुयात्, तत्र समकालिकत्वं तु स्यादेव परन्तु अर्वाचीनत्वमाधुनिकत्वं वा न स्यात्। अतः स्वकीया मनीषा, निजस्वा अभीप्सा, तदनुगुणा प्रवृत्तिश्च अत्र कारणम्। आयुष्मतः राकेशकुमारदाशस्य तन्मित्राणां शिष्याणां च लेखनीषु वयं पश्यामो नवयुगस्य सर्जनाशक्तिं, परम्परासातत्यं, पर्याप्तं ज्ञानम्। अत्र पुना रमते मतिर्मतिमतामपि।

परामबाश्रीयोगमाया इति नाम नवीनानां कथाकाव्यसमीक्षाअनुवादकाराणां पथप्रदर्शकं वर्तते। अस्याः लेखिकायाः रचनाविश्वमेवं वर्तते मन्दाकिनी (संस्कृतप्रबन्धसंग्रहः), मृत्युः चन्द्रमसः; (अनूदित उपन्यासः), सम्पर्कः, हे मदीय दूरबन्धो, उपनिषत्सु प्राणविद्या, (शोधग्रन्थः) च।

**सम्पर्कः** इति कथाग्रन्थः अस्याःऐषमः साहित्येकादम्याः युवपुरस्कारेण सभाजितः। अत्र संगृहीताः कथाः यदा तदा पत्रिकासु प्रकाशिताः। कथासंग्रहस्य नाम सम्पर्क इति अन्तिमकथायाः सम्पर्को नामहीन इति कथायाः नामानुसारेण कथासंग्रहस्य नाम निश्चितं लेखिकया इति प्रतिभाति। अथवा सर्वासु कथासु नायिकाभिः सह अपरेषाम् अपरासां च ये सम्पर्काः तत्सम्बद्धाश्च मनस्तात्त्विकविशेषा दरीदृश्यन्ते ते एव कथासंग्रहस्य नामकरणे बीजभूताः स्युः।

सर्वा अपि कथाः नायिकाप्रधानाः। कासुचित् कथासु व्यक्ततया समाजेन वा नायिकाभिः सह कृतेनान्यायेन वंचनेन उत अपरेण कारणेन प्राप्तं दुःखमेव सर्वासु कथासु मूलभूतम्। सुचेता, सुजाता, सौम्या इत्थं वंचिताः नायिकाः। अपरतः सुमित्रा स्वीयसंस्कारेणैव स्वयं क्लेशिता। सम्प्रति नगरेषु विविधकार्यालयेषु दारिद्र्यवशात् कार्यं कुर्वतीनां बह्वीनां ग्राम्ययुवतीनां बहुविधसमस्याः सहमानानां मध्ये सुमित्रा एका। पद्मा समाजेन वंचिता, व्यक्त्या पोषिता। भाग्यबलमुत निष्ठाबलं, धूमाभाजीविका इति कथयोः वस्तुनः अपेक्षया चरित्राणां भावनानां विचारणं कृतवत्या लेखिकया स्पष्टत एव भाववादस्य (sentimentalism) आश्रयः कृतः। प्रतीक्षा, संशयः, प्रणयोपकथा इति कथासु लेखिकायां रोमाण्टिकवादस्य (**Romanticism**) छाया दृश्यते। सर्वा अपि कथाः नारीवादेन प्रभाविताः। किन्तु यथा नारीवादिनां बहूनां लेखेषु सर्वे पुरुषा दुष्टा भवन्तीति काचिद् अवधारणा दृश्यते न तथात्र लेखिकाया भावना। कासुचित् कथासु समाजस्य दुःस्थितीः स्पष्टशब्दैः वर्णयन्त्यां लेखिकायां रोमाण्टिकविरोधवादस्य (anti romanticism) छायापि दृश्यते एव। समग्रतया ग्रन्थे लेखिकया समाजस्य समस्यानां विचारः कृतः। काश्चन समस्याः बहोः कालात्समाजे प्रथिताः क्रमशः विलयं गच्छन्त्यः यथा जातिविचारः, पुरुषैः भार्याणां शारीरिकनिपीडनम् इत्यादयः, काश्चन सम्प्रति समाजे उद्भवन्त्यः यथा नामहीनः सम्पर्क इत्यत्र विचारिता समस्या।

**राकेशकुमारदाशः** १९८५ ईशवीयसंवत्सरे मार्चमासस्य सप्तविंशतिदिनांके

श्रीराकेशकुमारदाशः (छद्मनामगुप्तचन्द्रः) पश्चिमवंगे उत्तरचव्विशपरगनायां जातः, वैयाकरणोऽप्ययम् आधुनिककथासाहित्ये रुचिसम्पन्नः बहु पठित्वा स्वल्पं मौलिकसाहित्यं सृष्टवान्, अधिकन्तु अनूदितसाहित्यमसृजत्। अपि च संस्कृतकथाभ्यः समर्पितायाः कथासरित्पत्रिकाया अयं सहसम्पादकत्वं वहति। अस्य मौलिक्यः कथाः कथासरिति एव प्रकाशिताः। यथा १.२९.०४.१८७२, २.इन्दोश्चन्द्रिका, ३. चरमश्वासः, ४.एका तमिस्रा ५. का मे जननी। अत्रैव प्रकाशिता अस्य अनूदिताः कथा:एवं सन्ति। यथा १.क्षुधितपाषाणः, २.जमिला, ३.आत्महत्या, ४.युद्धं, ५.पणः, ६.शुभदृष्टिः, ७.स्वप्नः, ८.सम्पादकः, ९. काचन लघ्वी पुरातनी कथा। एतदतिरिच्य कवीन्द्रकथाकल्लोलिनी इत्यनूदितरवीन्द्रकथासंग्रहात्मके ग्रन्थे अनेन चतुर्दश रवीन्द्रकथा अनूदितास्ता यथा घटस्य कथा, राजपथस्य कथा, मेघदूतम्, कंकालः, अनधिकारप्रवेशः, क्षुधितप्रस्तराः, अग्रजा, पुत्रयज्ञः, उद्धारः, कृतघ्नः शोकः, चित्रम्, प्रथमपत्रम्, परी, विदूषकश्चेति।एतद्विहाय 'मेघमल्लारः' नाम विभूतिभूषणबन्द्योपाध्यायस्य कथासंग्रहः अनेनानूदितः।

**मेघमल्लारः** १९३१ ईसवीयाब्दे 'मेघमल्लारो' नाम विभूतिभूषण-बन्द्योपाध्यायस्य कथासंग्रहः प्रकाशितः यः खलु राकेशेन २०१३ संवत्सरे अनूदितः। संग्रहस्य प्रथमा कथा 'मेघमल्लार' इति। तदनुसारेण संग्रहस्य नामकरणं जातम्। अस्मिन् संग्रहे दश कथा वर्तन्ते। मेघमल्लारः, नास्तिकः, उमा, चण्डीवधूटी, नववृन्दावनम्, अभिशप्तम्, बालायाः कृत्यम्, शकटम्, पूतिकामंचः, उपेक्षिता इति।

'मेघमल्लार' इति प्रथमकथायां बौद्धयुगतान्त्रिकयुगयोः सन्धिक्षणं च प्रदर्शितम्। 'पूतिकामंचः' अस्य संग्रहस्य सर्वोत्तमा कथा इति वक्तुं शक्यते; यत्र कन्याबाहुल्ये दरिद्रे परिवारे अपि पितृमातृपुत्रीणां मुग्धजीवनस्य स्फीताः लावण्यपूर्णाः सुखदुःखहासविलासा अक्षतरूपेण संरक्षिताः सन्ति कथाकारेण। विभूतिभूषणस्य रचनासु वंगीयसंस्कृतिः, विविधवृक्षविहगादीनां नामानि, वंगदेशस्य उत्सवाचाराः, लौकिकप्रथाश्च पुनः पुनः कथासु विवक्षिताः सन्ति। अतः तेषां संस्कृतानुवादे नूनं विद्यते अनुवादकस्य महती भूमिका। अत्र मूलकथाकारस्य भावसम्पत्तिः शैली च सुरक्षिते एव, परन्तु कुत्रापि संस्कृतभाषामर्यादा न स्खलिता इत्यपि योजनीयम्। प्राकृतिकच्चित्रं तु कस्याः अपि पङ्क्तेरुद्धरणेन सम्भवेत्। यथा वर्णितं मेघमल्लारे भद्रावतीनद्याः तटे शाल्मलीतमालादिवने तस्मिन् वर्षे घनघोरा वर्षा अभूत् । समग्रं

गगनमास्तीर्य कस्याश्चिद् विरहिण्याः पुरसुन्दर्याः मेघश्यामलः अत्यन्तविन्यस्तचिकुरराशिः, प्रावृड्रजन्याः घनान्धकारः तस्याः प्रियहीनहृदयस्य निविडनिर्जनता, दूरवनस्य अनियमितः वातः तस्याः आकुलदीर्घश्वासः, तस्याः प्रतीक्षाश्रान्ते अक्ष्णोः अश्रुभारेण अविरामवृष्टिः, मेघमेदुरस्य आकाशस्य वक्षसि क्षणप्रभा तस्य हताशहृदये क्षणिकाशायाः मेघदूतः।

**गोपीकृष्णरेघुः** बेलुरे वेदविद्यालये, रामकृष्णमिशन्विवेकानन्द-विश्वविद्यालये संस्कृताध्ययनकेन्द्रे अतिथ्यध्यापकरूपेण विराजितः कन्नडमूलीयः गोपीकृष्णः अनामिकः इति छद्मनाम्ना उत्तमां कथां लिखति, अनुवदत्यपि। तेन अनूदिता चीनाया महाप्राकारः इति कथा कथासरितः त्रयोदशचतुर्दशसंयुक्ततरंगे प्रकाशिता जाता। एस्.एम्.एस्सेवामाधारीकृत्य भिन्नशैल्या लिखिता अपरा कथा लघुसन्देशसेवा इति तस्याएव पत्रिकायाः सप्तदशतरंगे स्थानिता सुखपाठ्या वर्तते। धर्मसंकटं, धार्मिकरोषः, पत्रिकायां नाम, मूषकरक्षकः इत्यादि अस्य टुप्कथाः चित्तमाकर्षन्ति।

**प्रतीकदत्तः** कलिकातायां वेहेलासमीपे बानार्जीपडायां भोलानाथदत्ततन्द्रादत्तयोः पुत्रत्वेन १९८८ संवत्सरे अगष्टमासस्य प्रथमदिनांके जातः। प्रतीकदत्तो विविधाभाषापारंगतो विविधपुरस्कारैः सभाजितः श्रीशंकरशिक्षायतने शोध सहायकरूपेण कार्यं करोति। विविधेषु दर्शनेषु शास्त्रेषु तस्य शोधपत्राणि सन्ति। मधुसूदनओझाकृतस्य जगद्गुरुवैभवमिति ग्रन्थस्य सम्पादनं तेन क्रियते। कथासरिदिति पत्रिकायां तस्य एका अनूदिता कथा,एका मौलिकी कथा च प्रकाशिते पाठकैरभिनन्दिते। स रस्किन् वण्डवर्यस्य 'द तिफ" कथां 'तस्कर' इति शीर्षकेण अन्ववदत्। अपरा तस्य मौलिकी कथा 'आशा' इति कथासरितः सप्तदशतरंगे प्रकाशिता।

**अरिजिद्गुप्तः** १९८९ ईशवीयसंवत्सरे अगष्टमासस्य सप्तमे दिनांके लब्धजन्मनः जनस्यास्य विविधवंगीयकथानां रवीन्द्रसंगीतानां च संस्कृतानुवादे विद्यते महती रुचिः प्रवृत्तिश्च।

'कुमारी पृथा' इति कुन्त्या जीवनाधारिता एकैव मौलिकी कथा तस्य कथासरितः पंचदशतरंगे प्रकाशिता सहृदयान् विमोहयति। जीवितोपरते; महेशः प्रसिद्धकथाद्वयं तेनानूदितम्। तेन अनूदितानि पंच रवीन्द्रसंगीतानि पद्यबन्धायां प्रकाशितानि सन्ति। यथा आत्मानं विस्मृत्य..., आनन्दधारा वहति भुवने, फाल्गुनस्य

नवीने दिने, ध्वनितं हि, सन्ध्याया मेघमाला शीर्षकेण।

वस्तुत उत्तरपुरुषेषु सम्भावनागर्भं पुष्कलं सर्जनं सुप्तायितं वर्तते। सम्भावनाया विद्युच्चमत्कृतिं वयमाविष्कुर्मः शिवशरणकरण: विवेककर्मकार:अनिरुद्धकरसुमन्त-चौधरीसौमित्राधिकारीशुभ्रजितसन्तुबृहस्पति-भट्टाचार्य: शम्पासावेरीपुरकायस्थानां कथासु। अत:एकविंशशतकीयं संस्कृतकथासाहित्यं पुनः स्वमर्यादां प्रतिष्ठापयितुं गच्छतीति निश्चप्रचम्।

कथासरितः एकविंशं यावत् तरंगेषु प्रकाशितानां कथादीनां सामान्यं विवरणमत्र योजयामः। तव कथामृतम् (साक्षात्कार:)विभागे अभिराजराजेन्द्रमिश्रकलानाथशास्त्रिराधावल्लभत्रिपाठिप्रभुनाथद्विवेदिकेशवचन्द्रदाश शिवप्रसादभारद्वाजविश्वासबनमालिबिश्वाल एच्.वि.नागराजरावरवीन्द्रकुमारपण्डा-प्रमोदकुमारनायकजनार्दनहेगडेवर्याणां साक्षात्कारा: गृहीता:। शताधिककथासु काश्चन अत्युत्तमा: आसन्।

कथासरितः द्वादशाद् एकविंशं यावत् तरङ्गेषु प्रकाशितानां कथादीनां विवरणम्

क्रमः कथा: कथालेखक:

१. **मातुर्निमित्तम्** अभिराजराजेन्द्रमिश्र: १२

३ **काथरिनायाः भारतयात्रा** बनमाली बिश्वाल: १२

३. **इन्दोश्चन्द्रिका** गुप्तचन्द्र: १३

४. **चरमश्वास:** गुप्तचन्द्र: १५

५. **श्रावणस्य प्रथमदिवसे** नारायणदाश: १५

६. **कुमारी पृथा** अरिजिद्गुप्त: १५

७. **कन्यादर्शनम्** प्रभुनाथद्विवेदी १५

८. **अव्यक्तम्** विवेककर्मकार: १५

९. **भाग्यविधाता बायाबाबा** बनमाली बिश्वाल: १५

१०. **ते के सौमित्रः** अधिकारी १५

११. **ग्रामस्य नाम घटग्रामः** अरुणरंजनमिश्र: १६

१२. **अद्‌भुतो भूत:** बनमाली बिश्वाल: १६

१३. **अतिक्रमणम्** गोपबन्धुमिश्र: १६

**लघुकथाः**

**टुप्कथा**



**लघूपन्यासः**



**बालकथाः**

**स्पशकथा**

१. क्वचिदंशे मूर्खता जनार्दनहेगडे

**लोककथाः**

१. सुवर्णमयमाम्रफलम् पूर्णचन्द्र उपाध्यायः १२

२. अजगरसर्पकथा चन्दनकुमारचक्रवर्त्ती १२

**स्मृतिकथासु** हर्षदेवमाधावस्य बच्चूलाल-सविता-जयवन्तसिंहः-आचार्यवल्लभादयः;त्रासदकथासु नारायणदाशस्य चित्रकर-जलभूत- देवो रक्षति-मम प्राणा इह प्राणाः इत्यादयः, व्यंग्यकथासु प्रमोदकुमारनायकः अनर्थकोशः-भाषासाहित्योत्सवे-स्वर्गपुरे च सुखपाठ्याः सन्ति। अनूदितकथानां ते कथासरितो विशिष्टं स्थानं वर्तते। अस्य २,११,१४-१५, २०-२१ तरंगाः अनूदितकथानां विशेषतरंगाः आसन्, ८० कथाः अनूद्य। एतदतिरिच्य प्रतितरंगं द्वित्राः अनूदिताः कथाः आगच्छन्ति एव। काश्चन विशिष्टाः कथाः यथा-

१. **तात्त्विकः** मूलओडियाकथाकारः-प्रतिभारायः, अनुस्रष्टा-भागीरथिनन्दः

२. **जमिला** मूलवङ्गीयकथाकारः-एसवाजेद-आलिः, अनुस्रष्टा-राकेशदाशः

३. **जीवितोपरते** मूलवङ्गीय-कथाकारः-रवीन्द्रनाथठाकुरः, अनुस्रष्टा- अरिजिद्गुप्तः

४. **मम प्रिया मातृभूमिः** मूलहिन्दीकथाकारः-मुन्शी प्रेमचन्दः, अनुस्रष्टा-यदुवीरस्वरूपः

५. **असञ्जातस्य उलूकस्य दुःखम्** मूल-हिन्दी-कथाकारः-गोपालचतुर्वेदी, अनुस्रष्टा-बनमालीबिश्वालः

६. **टोबाटेकसिंहः** मूलऊर्दूकथाकारः-सदतहसनमण्टो, अनुस्रष्टा- कौशलतिवारी

७. **जन्मान्धस्य स्वप्नः** मूलओडियाकथाकारः-अरुणरञ्जनमिश्रः, अनुस्रष्टा-बनमालीबिश्वालः

८. **तस्करः** मूलआङ्गलकथाकारः-रस्किन्-बण्ड, अनुस्रष्टा-प्रतीकदत्तः

९. **पत्रमित्रम्** मूलआङ्गलकथाकारः-जि.श्रीनिवासरावः, अनुस्रष्टा-सूर्यप्रकाशशुक्लः

१०. **उपहारः** मूलआङ्गलकथाकारः-ओ-हेनरी, अनुस्रष्ट्री-अर्चनातिवारी

११. **ओथेलो** मूलआङ्गलकथाकारः-चार्लसमेरील्याम्ब,अनुस्रष्ट्री- पराम्बाश्रीयोगमाया

१२. **महिलायाः पाटलम्** मूलआङ्गलकथाकारः-अलिव-श्रेइनर, अनुस्रष्टा-गिरिधारिपण्डा

१३. **ललितनृत्यम्** मूलफ्रेन्चकथाकारः-गाइ-डी-मपासा, अनुस्रष्टा-गोपबन्धुमिश्रः

१४. **आत्महत्याः** मूलफ्रेन्चकथाकारः-गाइ-डी-मपासा, अनुस्रष्टा-राकेशदाशः

१५. **युद्धम्** मूलइटलियनकथाकारः-लुइगिपिराण्डेलो, अनुस्रष्टा-राकेशदाशः

१६. **पणः** मूलरश्यानकथाकारः-एण्टनचेकवः, अनुस्रष्टा- राकेशदाशः

१७. **चीनाया महाप्राकारः** मूलजर्मनकथाकारः-फ्रान्सकाफका, अनुस्रष्टा-अनामिकः

१८. **रुम्पेल्स्तिल्ल्खेन** मूलजर्मनकथाकारः-ग्रीमभ्रातरौ, अनुस्रष्टा- सदानन्ददासः

१९. **भीतिसंस्कृतिः** मूलस्पैनिशकथाकारः-एडुआर्डोगेलियानो, अनुस्रष्ट्री-अर्चनातिवारी

२०. **क्यूपिडः साइके च** मूल-ग्रीक-कथाकारः-होमरः, अनुस्रष्ट्री- शैलजापाण्डेया

२१. **एकस्मिन् कुञ्जे** मूलजपनीकथाकारः-रियुनोसुके अकुतागवा अनुस्रष्टा-नारायणदाशः

२२. **ऐन्द्रजालिकतुलिका चीनदेशीयलोककथा** अनुस्रष्टा- अनिरुद्धकरः

२३. **जेनकथाः चीनदेशीयबौद्धदार्शनिककथाः** अनुस्रष्टा-कौशलतिवारी

२४. **शुभदृष्टिः** मूलवङ्गीयकथाकारः-रवीन्द्रनाथठाकुरः, अनुस्रष्टा-राकेशदाशः

२५. **कथा** मूलवङ्गीयकथाकारः-रवीन्द्रनाथठाकुरः, अनुस्रष्टा-नारायणदाशः

२६. **भगवद्विश्वासः** मूलओडियाकथाकारः-विद्यानन्दगिरिः, अनुस्रष्टा-मनोरञ्जनसेनापतिः

२७. **कारुणिकः याचकः** मूलहिन्दीकथाकारः-जयशङ्करप्रसादः, अनुस्रष्टा-हीरालालदाशः

२८. **जेनकथाः बौद्धदार्शनिककथाः** अनुस्रष्टा-कौशलतिवारी

२९. **चतुर्वेदिमहोदयस्य कथा** मूलहिन्दीकथाकारः-हरिशङ्करपरसाई अनुस्रष्टा-कौशलतिवारी

३०. **नवीनमहोदयस्य बहुबीजवृक्षः** मूलहिन्दीकथाकारः-हरिप्रकाशत्रिपाठी, अनुस्रष्टा-पूर्णचन्द्र उपाध्यायः

३१. **इतरा** मूलगुजरातीकथाकारः-हिमांशी शेलत, अनुस्रष्ट्री-नीना भावनागरी

३२. **हारिता च सा कथा** मूलओडियाकथाकारः-अरुणरञ्जनमिश्रः, अनुस्रष्टा-बनमाली बिश्वालः

३३. **मृत्तिका महाकन्या** मूलओडियाकथाकारः-अरुणरञ्जनमिश्रः

अनुस्रष्टा-बनमाली बिश्वालः

३४. **ब्राह्मणस्य तथा धूर्तत्रयस्य कथा पुनरुक्ता पञ्चतन्त्रीया** मूलओडियाकथाकारः-कैलासपट्टनायकः, अनुस्रष्टा-सदानन्ददासः

३५. **स्वप्नः** मूलवङ्गीयकथाकारः-अरविन्दघोषः, अनुस्रष्टा-राकेशदाशः

३६. **महेशः** मूलवङ्गीयकथाकारः-शरच्चन्द्रचट्टोपाध्यायः, अनुस्रष्टा-अरिजिद्गुप्तः

३७. **पत्रालयाध्यक्षः** मूलओडिया, कथाकारः-फकिरमोहनसेनापतिः अनुस्रष्टा-बिभुदत्तमिश्रः

३८. **सुश्रीः पद्मा** मूलहिन्दीकथाकारः-मुन्शिप्रेमचन्दः, अनुस्रष्टा-बनमाली बिश्वालः

३९. **शिक्षा** मूल-हिन्दी, कथाकारः-हरिप्रकाशराठी, अनुस्रष्टा-पूर्णचन्द्र उपाध्यायः

४०. **स न मृतः** मूलहिन्दीकथाकारः-कर्तारसिंहदुग्गलः, अनुस्रष्टा-नारायणदत्तमिश्रः

४१. **तिस्रः पिपीलिकाः** मूल-आङ्ग्ल-कथाकारः-खलिलजिब्रानः अनुस्रष्टा-कौशलतिवारी

४२. **मुक्ताफलम्** मूलआङ्ग्लकथाकारः-खलिलजिब्रानः, अनुस्रष्टा-कौशलतिवारी

४३. **घुणः** मूल-ओडिया-कथाकारः-प्रतिभारायः अनुस्रष्टा-भागीरथिनन्दः

४४. **सम्पादकः** मूलवङ्गीयकथाकारः-रवीन्द्रनाथठाकुरः, अनुस्रष्टा-राकेशदाशः

४५. **काचन लघ्वी पुरातनी कथा** मूलवङ्गीयकथाकारः-रवीन्द्रनाथठाकुरः अनुस्रष्टा-राकेशदाशः

४६. **टुप्कथाः** मूलआङ्ग्लकथाकारः-खलीलजिब्रानः, अनुस्रष्टा-कौशलतिवारी,

४७. **मुसलमान्याः कथा** मूलवङ्गीयकथाकारः-रवीन्द्रनाथठाकुरः, अनुस्रष्टा-स्वयम्भादासः

४८. **उक्तमासीत्तया** मूलहिन्दीकथाकारः-चन्द्रधरशर्मगुलेरी, अनुस्रष्टा-नारायणदत्तमिश्रः

४९. **बिडालः** मूलवङ्गीयकथाकारः-वङ्किमचन्द्रचट्टोपाध्यायः, अनुस्रष्टा-अरिजिद्गुप्तः

५०. **भार्यायाः पत्रम्** मूलवङ्गीयकथाकारः-रवीन्द्रनाथठाकुरः, अनुस्रष्टा-राकेशदाशः

५१. **मातामहनप्तृकथा** मूलओडियाकथाकारः-फकीरमोहनसेनापतिः अनुस्रष्टा-सुकान्तकुमारसेनापतिः

५२. **पशुमानवौ** मूलहिन्दीकथाकारः-हरिप्रकाशराठी, अनुस्रष्टा-पूर्णचन्द्र उपाध्यायः

५३. **परनिन्दा** मूलवङ्गीयकथाकारः-रवीन्द्रनाथठाकुरः, अनुस्रष्टा- सुमन्तचौधुरी

**समीक्षायनम्**



**धारावाहिनी**



**विशिष्टरचना**



**कथाकारवीथी**

१. **अनामिकः**-सुधर्मा-पैलेस, पुञ्जार्, कोट्टयं,केरलम्
२. **'अभिराज'राजेन्द्रमिश्रः**-सन-राइज विला,उ. मा. विद्यालय

समीप, लोअर समर हिल्स, शिमला- १७१००५।

१. **अरिजिद्गुप्तः**, संस्कृतविभागः, द्विजेन्द्रलालमहाविद्यालयः, कृष्णनगरं, नदिया, पश्चिमवङ्गाः-७४११०१

२. **अरुणरञ्जनमिश्रः**, संस्कृतविभागः,विश्वभारती, शान्तिनिकेतनम् पश्चिमवङ्गः ७३१२३५।

३. **अर्चनाकुमारी दुबे**, रवीन्द्रनिवासः,सी, वनस्थलीविद्यापीठम्, राजस्थानम् ३०४०२२।

४. **अर्चनातिवारी**, कोरसम, फतेहपुरं, उ.प्र.-२१२६६५।

५. **उदयनः**, अक्षरं, द्वितीय फेज, अष्टम क्रास, गिरिनगरं, वेंगालूरं-५८।

६. **ऋषिराजजानिः**, ८ राजतिलकवङ्लो, आबादनगरसमीपे, बोपल, अहमदाबादः, ३८००५८।

7. **एच.आर.विश्वासः**, अक्षरं, द्वितीय फेज, अष्टम क्रास, गिरिनगरं, वेंगालूरं-५८।

८. **एच.नागराजरावः**, सुधर्माकार्यालयः, ५६१, रामचन्द्र अग्रहारः, मैसूर-४७०००४।

९. **किशोरनाथझा**, बिट्ठो, सरिसबपाही, मधुवनी, बिहार।

१०. **केशवचन्द्रदाशः**, शशिरेखा,विश्वविद्यालयमार्गः,पुरी, ७५२००३।

११. **कौशलतिवारी**, मालादेवीमोहल्ला, वार्ड.नं.३१, वांरा, राजस्थानं-३२५२०५।

१२. **गङ्गाधरपण्डा**, कुलपतिः, श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, श्रीविहारः,पुरी।

१३. **गिरिधारीपण्डा**, संस्कृतविभागः, मेदिनीपुरम् पश्चिमवङ्गः।

१४. **गुप्तचन्द्रः**-नवीननगरम्, अश्विनीपल्ली, बारासत, कोलकाता

१५. **राकेशकुमारदाशः**, गोपबन्धुमिश्रः, संस्कृतविभागः, बनारसहिन्दुविश्वविद्यालयः, वाराणसी, उ.प्र.२२१००५।

१६. **चन्द्रकान्तपण्डा**, संस्कृतविभागः, विक्रमटुडुमेमोरियलमहाविद्यालयः, वडावजार, वराभूमः, पुरुलिया, प.बं. ७२३१२७।

१७. **जगन्नाथपाठकः**, ३/४, एम्.आई.जी. आवासविकासपरिषद्, झूसी,

इलाहाबादः, उ.प्र. २११०१९।

१८. **जनार्दनहेगडे,** अक्षरं, द्वितीय फेज, अष्टम क्रास, गिरिनगरं, वेंगालूरम् -५८।

१९. **त्रिदिवरायमण्डलः,** रामकृष्णमिशनविवेकानन्दविश्वविद्यालयः, बेलुर, हावडा।

२०. **देवर्षिकलानाथशास्त्री,** सी ८, पृथ्वीराजरोड, जयपुरम्, राजस्थानम् ३०२००१।

२१. **धर्मेन्द्रकुमारसिंहदेवः**, भोपालपरिसरः, राष्ट्रियसंस्कृतसंस्थानम्, संस्कृतमार्गः, बागसेवनिया,भोपाल, म.प्र.- ४६२०४३।

२२. **नारायणदाशः,** संस्कृतविभागः, रामकृष्णमिशनआवासीय स्वयंशासितमहाविद्यालयः, नरेन्द्रपुरं, कोलकाता-७००१०३।

२३. **परागजोशी,** कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः, रामटेक, नागपुरम्, महाराष्ट्रः।

२४. **पराम्बा श्रीयोगमाया** कुन्तला कुमारी साबत महिला महाविद्यालयः, बालेश्वरं।

२५. **पूर्णचन्द्र उपाध्यायः,** अध्यक्षः, संस्कृत विभागः, सर्वकारीय महाविद्यालयः, बुन्दी, राजस्थानम्

२६. **प्रफुल्लकुमारमिश्रः**-कुलपतिः, उत्तरओडिशाविश्वविद्यालयः, श्रीरामचन्द्रविहारः, लखतपुरम्, वारिपदा, मयूरभञ्ज, ओडिशा ७५७००३

२७. **प्रमोदकुमारनायकः,** प्राचार्यः, दामोदरसंस्कृतमहाविद्यालयः, भद्रकः, ओडिशा।

२८. **बनमालीबिश्वालः** ५७, वसन्तविहारः, वसन्तविहारोद्यानसमीपे, झूसी, इलाहाबाद, उ.प्र.- २११०१९।

२९. **बुद्धेश्वरषडङ्गी,** श्रीसीतारामदासादर्शसंस्कृतमहाविद्यालयः, कलिकाता।

३०. **बृहस्पतिभट्टाचार्यः,** संस्कृतविभागः, कलासङ्कायः, काशीहिन्दु विश्वविद्यालयः।

३१. **मानस शरण तिवारी,** आइ-ए न-, स् कलिंगा, केन्द्रीयविद्यालयः,

विशाखापत्तनम्, आं.प्र.।

३२. **रणजितबेहेरा,** भाषाविभागः, राष्ट्रियशैक्षिकअनुसन्धान परिषद्, नवदेहली १६।

३३. **रहसविहारीद्विवेदी,** ६१५,समदडिया ग्रीन सिटी, माढोताल,जबलपुरम्, म.प्र. ४८२००२।

३४. **राधावल्लभत्रिपाठी,** कुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः, ५६,५७, इन्स्टिट्यूशनल, एरिया, जनकपुरी, नवदेहली ५८।

३५. **विनोदकुमारदीक्षितः,** ७१/२,नेहरुनगरम्, देहुरिया, उ.प्र. २७४००१।

३६. **शाबेरीपुरकायस्थः,** समीपे सप्तर्षिपुरकायस्थस्य,एल.एल.एम.के. कैम्पस, कुन्नमङ्गलं, कोझिकोडे,केरलं-६७३३७४

३७. **शिवप्रकाशपाठकः,** गङ्गानाथझापरिसरः, राष्ट्रियसंस्कृतसंस्थानं, इलाहाबाद-२१०००२।

३८. **शिवप्रसादभारद्वाजः,** भारद्वाजनिकेतनं, हरिपुरं, कांबली, देहरादून, उत्तराञ्चलम्

३९. **सत्यव्रतशास्त्री** सी. २४८ डिफेन्स कालोनी, नवदेहली ११००२४।

४०. **सदानन्ददासः,** लाइफचिक्विश्वविद्यालयः।

४१. **सुकान्तकुमारसेनापतिः,** श्रीसदाशिवपरिसरः, राष्ट्रियसंस्कृतसंस्थानम् पुरी-७५२००२।

४२. **हर्षदेवमाधवः**- ८ राजतिलक बङ्गलो, आवादनगरसमीपे बोपल अहमदाबाद

कथासरितः प्रकाशिका - कथाभारती, ५७, वसन्तविहारः, झूसी, इलाहाबाद-२११०१९

●

# पण्डितश्रीरामदवेविरचितखण्डकाव्येषु पर्यावरणचेतना

**डॉ. प्रमोदकुमारवैष्णवः**
**व्याख्याता संस्कृत**
**राजकीयमहाविद्यालय, कोटा**

पृथिव्यां जीवनस्य उत्पत्तिः तथा च तस्य वर्तमानकालपर्यन्तं अद्भुतविकासपरम्परायां मानवस्य उच्चतमं स्थानं प्राप्तमस्ति! पृथिव्याः प्रारम्भिकजीवः एककोशीय अमीबा आसीत्। तस्मिन् जन्तोः वनस्पतेः च कोऽपि भेदः नास्ति। अस्यां परम्परायां एकः तादृशः एककोशीयजीवं 'युग्मिना' विकसितो बभूव यस्मिन् जन्तोः लक्षणं हरितलवकः विद्यमानः अभूत्। पृथिव्यां जन्तूनां वनस्पतीनां च वर्तमानकालपर्यन्तं विकासस्य सुदीर्घा कथा अस्ति। प्रकृतौ एतेषां जन्तूनां तथा च एतासां वनस्पतीनां अन्योन्याश्रयः धनिष्ठसम्बन्धः अस्ति। पादपः प्रकृतौ जन्तूनां जीवनस्य आधारः वर्तते। पादपैः विना जन्तूनां जीवनं असम्भवमस्ति। जन्तवः श्वसनक्रियायां प्राणवायुं आक्सीजनं गृहीत्वा कार्बनडाईआक्साईडवायुं उत्सर्जितं कुर्वन्ति यं हरितपादपाः गृह्णन्ति। हरितपादपाः प्रकाशसंश्लेषणविधिना खाद्यनिर्माणप्रक्रियायां भूमेः प्राप्ते जले उपस्थितं आक्सीजनवायुं मुक्त्वा वायुमण्डले त्यजन्ति। यः वायुः समस्तजन्तुषु पादपेषु च श्वसनार्थमावश्यकोऽस्ति।

अद्य प्रकृतौ पादपानां छेदनं भवति येन समस्तपर्यावरणस्य तथा च प्रकृतेः सर्वाणि पारिस्थितिकतन्त्राणि तथा च खाद्यशृंखलादयः असन्तुलिताः भवन्ति। अद्य पर्यावरणसंरक्षणस्य महती आवश्यकता अस्ति। संस्कृतवाङ्मये अस्मिन् प्रसंगे अतीव सुन्दरं चिन्तनं उपलब्धमस्ति। वैदिकर्षयः वृक्षेभ्यः अतीव सम्मानं दत्तवन्तः। यथा **'नमो वृक्षेभ्यो हरिकेशेभ्यः वनानां पतये नमः'** (यजुर्वेद १६.१७.२०) ऋग्वेदः वनस्पतीनां उच्छेदनं निषेधयति यत् सीमन्तं धुनूथ। (ऋग्वेद ०१.३७.०६) वैदिकमानवः प्रकृतेरङ्के सम्पन्नानां विभिन्नप्राकृतिकघटनानां सूक्ष्मनिरीक्षणं कृतवान्। अथर्ववेदे वर्णनमस्ति यत्

सूर्यस्य सम्पर्के आगत्य मानवानां पादपानां समुचितविकासस्य तथा च पोषणस्य पर्याप्तं ज्ञानमासीत्। ऋषयः पर्यावरणं प्रति एतादृशः जागरूकाः आसन् यत् वनस्पतिकाः औषधयः प्राप्ताश्चेत् तेषां मूलस्य हानिः न भवेत् इत्यपि ज्ञानं तेषामासीत्। ऋषयः जानन्ति यत् नष्टे मूले सर्वं नष्टं भवति।

वेदेषु, पुराणेषु, रामायणे, महाभारते, स्मृतिग्रन्थेषु सर्वत्र पर्यावरणसंरक्षणस्य उपायाः वर्णिताः। आधुनिकसाहित्येऽपि साहित्यकाराः संस्कृतसाहित्ये पर्यावरणस्य संरक्षणविषये चिन्तिताः। तेषु राजस्थानस्य मूर्धन्यविद्वान् पण्डितः श्रीरामदवे अस्ति। जोधपुरनिवासिना माघपुरस्कृतपण्डितश्रीरामदवेमहोदयेन एकविंशतिसंस्कृतग्रन्थाः रचिताः। तेषु **भृत्याभरणम्, राजलक्ष्मीस्वयंवरम्, साकेतसंगरम्, त्रीणि महाकाव्यानि, पञ्चदश खण्डकाव्यानि, ललितालहरी, अपांगलीला, भारतीविलासः, परिखायुद्धम्, कामधेनुशतकम्, कालकौतुकम्, केलिभूकौतुकम्, कवितामञ्जरी, वियोगशतकम्, कारुण्यकादम्बिनी, मेघोपालम्भनम्, सौन्दर्यलीलामृतम्, अकिञ्चनचैत्यम्, यवनीनवनीतम्, ब्रह्मरसायनम्, त्रीणि अनूदितगद्यकाव्यानि, ध्रुवस्वामिनी, ( जयशंकरप्रसादः ), निर्मला ( मुंशीप्रेमचन्दः ), गीताञ्जलिः** (गुरुदेवरवीन्द्रनाथठाकुर) सन्ति।

पण्डितश्रीरामदवेकृतखण्डकाव्येषु पर्यावरणविषये गम्भीरचिन्तनमस्ति। प्राकृतिकाध्यात्मिकसांस्कृतिकपारिवारिकसामाजिकपर्यावरणविषये वर्णनमस्ति।

'परिखायुद्ध'-खण्डकाव्ये कविना अमेरिकादेशेन ईराकदेशस्योपरि अत्याधुनिकशस्त्राणां प्रयोगेन कीदृशी विभीषिका उत्पन्ना तस्य वर्णनं कृतम्। उक्तं यत्-

**पाशी पश्यत शौरिपातपतितो व्यालैर्वृथाऽलोड्यते**
**शस्त्रैः पावकवर्षकैरभिहतस्तैलानले ताप्यते।**
**पश्यत्यात्मन एवं शासनतले नश्यन्ति यादांस्ययं**
**पाथोधिश्रिय आश्रयाणि निभृतं रत्नाकरः किंकरः॥**

(परिखायुद्धम् ३१)

अत्र दुष्टजनाः अग्निवर्षकशस्त्रैः वरुणदेवं संतापयन्ति। सः लक्ष्मी-आश्रयः जलजीवानां संकुलं नष्टीभूतं मूकं पश्यति। रत्नाकरः अपि किंकरः सन् सर्वं सहते। देवासुरसंग्रामसदृशसृष्टिप्रलयंकरी आग्नेयास्त्रवृष्टिराकुलीकृताः तैलाग्निधूमैः कलुषितः,

प्रक्षेपास्त्रैर्व्याकुलः क्षीरसागरे माधवः सर्वं पश्यति एव। शस्त्राणां विस्फोटकध्वानैः स्त्रीणां गर्भाः निपतन्ति विस्फोटध्वनिः दुर्बलजनानां हृदयगतिं अपि रुणद्धि। अग्निशस्त्राणां वर्षकैः देदीप्यमानाग्निज्वालैः आकाशे संचारशीला खगाः अपि भयभीताः लुप्ताः भवन्ति।

**शस्त्राणां स्फोटनादेन गर्भाः स्त्रीणां पतन्त्यहो।**
**रुद्धा च जायते नृणां दुर्बलानां गतिर्हृदाम्।।**

(परिखायुद्धम् ६८)

**अग्न्यस्त्राणां संघर्षे दृष्ट्वा ज्वालाविजृम्भणम्।**
**खेचरा विलयं यान्ति भीतभीता विहायसः।।**

(परिखायुद्धम् ६९)

**विमानान्यपि वर्षन्ति गोलकानि क्षणे क्षणे।**
**येनाभ्रंकशा हर्म्या जायन्ते भूमिशायिनः।।**

(परिखायुद्धम् ७०)

अग्निगोलकवर्षकैः विमानैः उन्नतानि सुरम्याणि भवनानि अपि विनष्यनि भवन्ति। तस्मिन् काले आर्तजनानां करुणक्रन्दनं श्रुत्वा वज्रहृदयजनानां मनोऽपि शोकाकुलं भवति। तैलकूपैः प्रज्वलिताग्निधूमैः व्याप्तं सम्पूर्णव्योम श्याममसीपात्रम् इव मलिनम् अभवत्। तैलकूपेभ्यः प्रसृततैलैः समुद्रस्य जलं दूषितमभवत् येन अनेके जलचराः मृताः। सर्वत्र व्याप्तैर्दुर्गन्धैः समुद्रजीवाः व्याकुला अभवन्। अस्मिन् खण्डकाव्ये आणविकशस्त्राणां प्रयोगे वायुप्रदूषणं, ध्वनिप्रदूषणं, जलप्रदूषणं च विषयीकृत्य गम्भीरचिन्ता व्यक्ता।

**भारतीविलास**-खण्डकाव्ये शब्दब्रह्मणः मायामातृकास्वरूपिण्या भारत्याः लीलाविलासः वर्णितः। तस्य प्रकृति-पोषणखण्डे पृथ्व्यापोवायुतेजोगगनसूर्यचन्द्रग्रहाणां वर्णनं कृतम्। यथा-

**ब्रह्माण्डोऽयं लघुनि निहितः पिण्डकुण्डे त्वयैव**
**स्वात्मन्येषोऽप्रकटितगती राजते चण्डसूर्यः।**
**चन्द्रो राकारमण इह नो मानसीवृत्तिनिष्ठः**
**दिव्याश्चैते गगनगतिकाः कल्पिता देहबद्धाः।।**

(भारतीविलासः ३)

हे भारति! त्वमेव विशालब्रह्माण्डे लघुपिण्डरूपेण मनुष्यस्य हृदये समाहिता। प्रचण्डसूर्यः शरीरस्य आत्मा, चन्द्रमा मनसः स्वामी सर्वे ग्रहाः अपि शरीरे बन्दीकृताः। गगनविहारी चक्षुरोगनिवारकसूर्यदेवः पूज्यपदवीं प्राप्तः। एकतः शशी लांछनयुक्तः कृतः। अपरतस्तु सुन्दरीणां मुखाभरणं कृतः, एकतः देवता निर्मिता अपरस्तु क्षयरोगेण शापितः, एकतः वियोगिनां कृते प्राणघातकः कृतः अपरतस्तु शिवमस्तके विराजितः, एकतः क्षाराम्बुधिः जातः अपरस्तु सुधाकररूपेण ख्यातिं प्राप्तः। (भा.वि.३५, ३६, ३७)

ऋतुसंहारकारिणि खण्डे ग्रीष्मशरद्वर्षाहेमन्तवसन्तशिशिराणां षड्ऋतूनां वर्णनं कृतम्। प्रकृत्या सुरमम्यस्वरूपाणां वर्णनमीदृशम्-

**त्वत्साम्राज्ये प्रकृतिसुषमा सर्वदा यौवनाढ्या**
**नो तद्भावाः प्रचुरसुखदाः कालचक्रावमृष्याः।**
**हीयन्ते नो सुभगतटिनीनीरवाहे विलासाः**
**नो वा मान्द्यं भजति विपिने कोकिलाकेलिनादः॥**

(भारतीविलासः ७७)

**प्रकृतिर्विकृतिं गता**- खण्डे जलवाय्वग्निध्वनिमृदाप्रदूषणस्य दुष्प्रभावः वर्णितः। यथा-

**धूमोद्गारपरायणानि परितो धावन्ति यानान्यहो**
**नित्यं प्राणितपोषकं च पवनं कुर्वन्त्यहो दूषितम्।**
**यः पूर्वं क्रतुधूमसौरभसुधासंवाहकोऽभूद्दिशाम्**
**सोऽयं यन्त्रसमुद्गतेन कुरुते धूम्रेण दिग्दूषणम्॥**

(भारतीविलासः ११६)

**लोकवाणीविमोह**खण्डे सांस्कृतिकप्रदूषणस्य चित्रणं कृतः-

**त्रपा भूषा यासां कुलवरवधूनामभिमता**
**मताऽसूर्यंपश्या नृपकुलमहिष्यश्च भुवि याः।**
**अहो तासां व्रीडा विलयमुपयाताऽद्य सहसा**
**चरन्त्यो नग्नार्धाः कथमपि न ते वेदनकराः॥**

(भारतीविलासः १५०)

याः कुलांगनाः लज्जां स्वभूषणं मन्यन्ते ता अद्य लज्जाभङ्गं कृत्वा

अर्धनग्नावस्थायां सर्वत्र भ्रमन्ति। एतत् कष्टदायकम् अस्ति।

**कामधेनुशतकम्**- खण्डकाव्ये गोः महत्त्वं वर्णितमस्ति। दवेमहोदयेन स्वामीदत्तशरणानन्दमहाराजेन जालौरजनपदे साँचोरक्षेत्रे पथभेड़ाग्रामे भारतवर्षस्य विशालगोशालां दृष्ट्वा गोवंशसंरक्षण-संवर्धनविषये ये दिव्यभावाः प्रस्फुटिताः ते काव्यबद्धभूताः 'कामधेनुशतकम्' रूपेण निबद्धाः।

सर्वप्रथमं तु कविना धेनोः महत्त्वं प्रतिपादितम्, धेनोः सेवायाः राज्ञा दिलीपेन रघुनामकः प्रतापी पुत्रः प्राप्तः। गोदुग्धम् अमृततुल्यं भवति। गोसेवायाः स्वर्गप्राप्तिः भवति। गोः शरीरे सर्वे देवगणाः निवसन्ति इति मन्यते। ते धर्मानुरक्ता जनाः धन्या ये गोरक्षार्थं संलग्नाः सन्ति-

**यया त्रिलोकी परिपाल्यते निजैः पीयूषतुल्यैरनिशं पयोभिः।**
**शस्यैः प्रशस्यैः कुरुते च शाद्वलाम् धरामिमां मूत्रपुरीषदानैः॥**

(कामधेनुशतकम् २१)

**स्वर्गस्य सोपानपदेऽस्ति संस्थिता हविःप्रदानैः सुरपोषिणीयम्।**
**मांगल्यमूर्तिः शुचिताविधात्री व्यासेन यस्याः भणिता प्रशस्तिः॥**

(कामधेनुशतकम् २२)

**धर्मस्य मूलं भणिता हि गावः ता एव मूलं निजसंस्कृतेश्च।**
**सर्वेऽपि देवा वपुषि प्रतिष्ठाः इति श्रुतौ नो भणितं हि तस्याः॥**

(कामधेनुशतकम् २७)

**दधिघृतैर्गृहमंगलसाधिनी निजपुरीषकणैः शुचिताकरी।**
**हरति मूत्रमलैरपि या रुजो वहति सूत्रमियं निखिलश्रियाम्॥**

(कामधेनुशतकम् ३३)

**सा नन्दिनी क्रन्दति** तथा च **क्रन्दतीयं कामधेनुः** खण्डे कामधेनोः करुणक्रन्दनं वर्णितम्। यन्त्रागारे गोवधस्य गोमांसस्य च भक्षणविषये चिन्ता व्यक्ता -

**विश्वोपकर्त्री जनपोषयित्री स्वाहावषट्कारहविर्विधात्री।**
**मूलञ्च लक्ष्म्याः दुरितापहन्त्री सा नन्दिनी क्रन्दति साम्प्रतं हा॥**

(कामधेनुशतकम्) ७१

**सैषा क्रन्दति कामधेनुरबला हा हन्यमानाऽधुना।।**

(कामधेनुशतकम् ८२)

**इह गोहननालयेऽद्य सा क्षुधिता तप्तजलेन दह्यते।।**

(कामधेनुशतकम् ८६)

**सा मृत्योर्पाशगताद्य क्रन्दति।।**

(कामधेनुशतकम् ८८)

**कथमद्य हि कामधेनवो वधिकानां वशगाः रुदन्त्यहो।।**

(कामधेनुशतकम् ९१)

शतकस्य अन्ते कविः देवान् प्रति अभ्यर्थनं करोति यत् इन्द्राग्निवरुणमहावीरशंकरप्रभृतयो देवगणाः गोवधकारकाणां कुलविनाशं करिष्यन्ति।

कारुण्यकादम्बिनीखण्डकाव्ये कविवरः सांस्कृतिकपारिवारिक-पर्यावरणान्तर्गतं स्वमातुः कारुण्यपूर्णवैधव्यजीवनस्य वर्णनं करुणरसे करोति। दवेमहोदयेन न केवलं स्वमातुः अपितु विश्वस्य सर्वमातृणां कृते काव्यं लिखितं या निःस्वार्थरूपेण अतिस्नेहेन स्वात्मजं परिपोषयन्ति। मातुः त्यागमयजीवनस्य उदाहरणं यथा -

**शीते कन्थावृतकृशतनुः कम्बलैश्छादयन्ती**
**ग्रीष्मे स्विन्ना व्यजनधुनितैर्नो मुदा वीजयन्ती।।**
**शुष्कैर्भोज्यैरुदरभरिणी चात्मनो नः कवोष्णैः**
**नो जाने सा कति कति रुजोऽस्मत्कृते हा प्रसेहे।।**

(कारुण्यकादम्बिनी ३६)

कविर्वर्तमानसमये मातुः दयनीयदशाया वर्णनमपि करोति यत् युवसु पुत्रेषु सत्स्वपि सा वृद्धाश्रमे गच्छति-

**धिक्तान् पुत्रसुतात्मजादिसुभगे संज्ञापदे संस्थितान्**
**ये निन्द्यैः कलितैर्निजैः पदमिदं कुर्वन्त्यहो पंकिलम्।**
**या धृत्वा नवमासमात्मजठरे यं वै स्थिता संकटे**
**वार्धक्ये समुपागते हि सहसा तेनैव सोपेक्ष्यते।।**

(कारुण्यकादम्बिनी ९६)

धिक् तान् पुत्रान् ये सुरेन्द्रभवनेषु निवसन्ति किन्तु येषां पितरौ वृद्धाश्रमे निवसतः। पुत्रपौत्रेषु सत्स्वपि एकाकिनौ अनाथालये जीवनं यापयतः।

शिखरिणीछन्दसि निबद्धे त्रिषष्टिपद्यात्मके **ललितालहरीखण्डकाव्ये** पं. दवेमहोदया आराध्यदेवीं कुलदेवीञ्च ललितादेवीं स्तुतवन्तः। समदड़ीग्रामे गुहायां स्थितस्य ललितादेवीविग्रहस्य वर्णनानन्तरं तत्रत्यां प्राकृतिकसुषमां वर्णयति कविः-

**उदग्रग्रीवैषा विटपवसनावेष्टितकटी**
**पयोदैः पीनांगी विविधलतिकाश्यामलतनुः।**
**पयस्स्रावस्निग्धा कमलकुलमुग्धेव करिणी**
**सरित्फेनापूरे प्लवनधृतकामा शिखरिणि॥**

(ललितालहरी २३)

फेनयुक्तलूनीनद्याः प्रवाहस्य मनोहारि वर्णनमस्ति।

**मेघोपालम्भन**-खण्डकाव्ये अतिवृष्टि-अनावृष्टि-रूपेण मेघानां विविध स्वरूपाणि व्यक्तानि। अत्र तु मेघोपालम्भनम्, मेघोपच्छन्दनम्, विरहिण्याः प्रणयिने संदेशार्थं मेघं प्रति याच्ञा, मेघप्रसादनम्, दुर्भिक्षे विकला धरा, अतिवृष्ट्याकुला धरा, नीरदानां गगनलीला, विचित्रास्ते वारिद विलासाः, किमर्थं कुत्स्यते मेघः, मेघस्यापि दास्यनिबन्धनम्, इमे मुग्धाः मेघाः, शृण्वन्तु भोः किं कथयन्ति मेघाः, इत्येतेषु खण्डेषु विभक्तेऽस्मिन् मेघस्य वर्णनं यथा-

**विद्युद्वीचिनिवासभूमिरियमाः वायोर्नु दोलाचला,**
**किं वा नीलनदस्य चेयममला धारा वहन्त्यम्बरे।**
**प्राचीनाः प्रतिमाः इहातिसुभगास्तष्टा ऋतूनामहो**
**हैमं हर्म्यकुलं किमत्र पतितं वातांचितक्रीडया॥**

(मेघोपालम्भनम् ३)

संक्षेपेण निवेदयामि यत् पण्डितश्रीरामदवेविरचितखण्डकाव्येषु पर्यावरणस्य विषये गहनचिन्तनं मननं च कृतम् अस्ति। प्रकृतेः असन्तुलितदोहेन कीदृशी विभीषिका भविष्यति तस्याः साक्षात् चित्रं समुपस्थापितम्। पर्यावरणस्य प्रदूषणस्य कानि कानि कारणानि सन्ति तेषां निवारणार्थमस्माभिः किं करणीयं पर्यावरणस्य संरक्षणं कथं भविष्यति एतत् सर्वमेव कविना स्वग्रन्थेषु वर्णितम्।

**कवितामंजरीकाव्ये** एकचत्वारिंशत् काव्यगीतानां संकलनमस्ति 'सर्वाणि गीतानि विविधविषयान् अवलम्ब्य रचितानि सन्ति' तेषु **बाधतेऽयं शीतकालः, दिवाकरश्च** प्रकृतिसम्बन्धीनि गीतानि सन्ति। दिवाकर-गीते कविः सूर्योदयस्य वर्णनं करोति-

**मधुजलैः परितः परिसिंचनं विलसितं गलितं रसिकोदितम्।**
**श्रुतिसुधा गणिका गणगीतिकाः स्तुतिकथाश्च गता रजनीपतेः॥**

(कवितामञ्जरी दिवाकर ४)

## *kavikokilaḥ* Gauri Kumar Brahma : a Sanskrit Poet of Utkala

Prof. Mrs.Prativa Manjari Rath
P.G.Dept. of Sanskrit,
Utkal University, Bhubaneswar

### 1. Introduction:

*Utkalavācaspatiḥ*, *kavikokilaḥ*, Prof. Gauri Kumar Brahma was an unparalleled Sanskrit poet of Odisha. He was born on 5th September, 1919 at Pratapalaxmanapura in the Bhanjanagar subdivision of Ganjam District in south Odisha. He was the son of Pandit Chandra Sekhar Brahma, an eminent scholar in all the branches of Sanskrit Literature. Prof. Brahma had passed his Matriculation from Madras, Graduation from Andhra University, Post Graduation from Utkal University, D.Ed. from Patna. He was the Lecturer in Oriya in the Government College from 1946 to 1958, Secretary of Orissa Sahitya, Sangeet-Natak and Lalitkala Academies from 1958 to 1968, Chief Tourist Guide Orissa Govt., Editor of Orissa Oriental Texts Series . He visited USSR in 1968 and delivered lectures on Indian Culture and Literature on Moscow Radio. He was the author of more than hundred books in Odia, English, Sanskrit and Hindi between 1942 to 1994. He was an orator of extraordinary reputation in Oriya, English and Sanskrit. He was honored with the titles like "*Utkala-vācaspati*" from Pondicherry, "*Puruṣa-sarasvatī*" from Mysore, " *Vāgmī-pravara*" from Kolkata, "*Mahāpuruṣa*" from New Delhi, "*Bhārata-pradīpa*", "*Sāhitya-mārtaṇḍa*" etc from Odisha. He was an authority on Odia Literature and on the cult of Lord Jagannatha. Prof. Brahma was an erudite scholar in both odia and Sanskrit language. His specialization in Odia- Bhanja- literature and Lord Jagannatha culture brought him national and international recognitions. Sanskrit was like his second mother tongue. He was the president of Odisha branch of *Viśva Saṁskṛtapratiṣṭhānam*. He started writing in Sanskrit at the late age of 66, through the grace of Lord Jagannath at Puri.

There are around 30 compositions of Prof .Brahma in Sanskrit pertaining to various aspects. He received the honorable titles of *kavi- kokila*, *Bhārata- pradīpa*, *vidvan- mānasa-marāla*, *utkala vācaspati*, *Sāhitya- mārtaṇḍa*, *paryāṭana- viśārada* etc. for his outstanding contributions in the field of Sanskrit literature. He is well known as an all-round scholar with specialization in old Odia poetry and Sanskrit literature, having commendable proficiency in Sanskrit *kāvyas*. He is widely known for his oratory and critical contributions. Prof. Gauri Kumar Brahma was famous as an eminent Essayist, literary critic, erudite speaker, a pioneer of system of criticism pertinent to the time. He passed away on 29th September 2011. The present paper is an appreciation of Prof. Brahma's contribution to creative Sanskrit writings. His contributions to Sanskrit language may be grouped as follows:-

